Digitized by Arya Samaj Foundation Chennai and eGangotri

# कथा-निर्झरी



सम्पादकः
**डॉ० धर्मेन्द्रकुमारः**

उपसम्पादकः
**डॉ० जीतरामभट्टः**

सहायकसम्पादकः
**प्रद्युम्नचन्द्रः**








**दिल्ली संस्कृत अकादमी**
(राष्ट्रिय राजधानी क्षेत्रम्, दिल्ली सर्वकारः)
२०१२-२०१३



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

प्रकाशकः-
सचिवः
दिल्ली-संस्कृत-अकादमी
(राष्ट्रिय-राजधानी-क्षेत्रम्, दिल्लीसर्वकारः)

(C) दिल्ली-संस्कृत-अकादमी
दिल्लीसर्वकारः

ISBN : 978-81-925829-3-1

प्राप्तिस्थानम् -
प्रकाशन-विभागः
दिल्ली-संस्कृत-अकादमी
(राष्ट्रिय-राजधानी-क्षेत्रम्, दिल्ली सर्वकारः)
प्लाट सं०५, झण्डेवालानम्, करोलबागोपनगरम्, नव दिल्ली-११०००५
दूरभाष : २३५५५६७६, २३६८१८३५, २३६३५५९२

मूल्यम्- १००/- रूप्यकाणि

मुद्रकः
मै० डालफिन प्रिण्टोग्राफिक्सः,
४ई/७, पाबला-बिल्डिंग, झण्डेवालानविस्तारः,
नव दिल्ली-११०००५
दूरभाषः—०११-२३५९३५४१, २३५९३५४२



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सम्पादकीयम्

अयि संस्कृतसमाराधनैकव्रतास्तत्र भवन्तो भवत्यश्च जानन्त्येव यद् दिल्ली संस्कृत अकादमी प्रतिवर्षं छात्राणामाचार्याणां विदुषां विदुषीनाञ्च कृते विविधान् कार्यक्रमान्नायोजयति, तेष्वेव कार्यक्रमेष्वखिल-भारतीयलघुकथालेखनप्रतियोगितासमारोहोऽप्येकः कार्यक्रमो भवति। विगतसत्रे समायोजितायां प्रतियोगितायां सम्मिलितानां संस्कृतलघुकथानां मूल्याङ्कनं विधाय प्राप्तपुरस्कारानुक्रमेण लब्धाङ्कानुसारं त्रयोविंशतिः संस्कृतलघुकथाः संयोज्य कथानिर्झरीति पुस्तकं प्रकाश्य साम्प्रतं भवतां भवतीनाञ्च करकमलेषु समर्पयन्नतितरां प्रसन्नतामनुभवामि। अकादम्या अध्यक्षाणां माननीयानां मुख्यमन्त्रिवर्याणां श्रीमतीनां शीलादीक्षित महोदयानां भाषामन्त्रिवर्याणां श्रीमतीनां प्रो० किरणवालियामहोदया-नामुपाध्यक्षाणां श्रीमतीनां प्रो० शशिप्रभाकुमारमहोदयानाञ्च कृपाभिः भाषा-कला-संस्कृति-विभागस्य सचिवानां श्रीमतां सज्जन सिंह यादव महोदयानाञ्च स्नेहेन कार्यमिदं सम्पन्नतां गतम्, तान्प्रत्यहं हार्दिकीं कृतज्ञतां ज्ञापयामि। सम्पादनादिकार्येषु सहयोगायाकादम्याः अधिकारिणः कर्मचारिणश्च मुद्रणकार्याय 'डाल्फिन प्रिन्टो ग्राफिक्स' इति मुद्रकञ्च प्रत्यहं भूरिशः कार्तज्ञ्यं ज्ञापयामि। संस्कृतलघुकथाः न केवलं बालानां छात्राणां वा कृतेऽपितु संस्कृत-भाषायाः जिज्ञासूनां संस्कृतप्रेमिजनानां संस्कृतानुरागिशिक्षकशिक्षिकाणाञ्च कृतेऽपि सुबोधाय भवन्त्यत एवासां संस्कृतलघुकथानां पठनाय प्रसाराय च निवेदयत्ययं जनः।

—विदुषाञ्चरणचञ्चरीकः

**डॉ० धर्मेन्द्रकुमारः**

सचिवः





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अनुक्रमणिका





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# आचार्यो ब्रह्मदेवः

—डॉ० शिवसागर त्रिपाठी

यथाकालं कर्णपुरं वाराणस्याञ्च विद्यामभ्यस्य प्राच्य-प्रतीच्यशैल्यां शिक्षां परिलभ्य साधुतमो विप्रः आचार्यो ब्रह्मदेवः विश्वविश्रुतां पाटलनगरीं समागच्छत्। एषः स्थानीयविश्वविद्यालयसेवायां रतत्वेन आबालवृद्धं कदाचिद् आचार्य इति कदाचिच्च प्रोफेसर इति नाम्ना विख्यातोऽभवत्। सभ्रान्तवसत्यामस्य विशालमेकं भवनमासीत्। यत्खलु प्रथमं तु अनुजानां ततश्च स्वपुत्राणां सुविधायै स्वधनेन परिश्रमेण च निर्मितमासीत् अत्रैव उषित्वाऽनुजाः शिक्षामवाप्य राजकीयसेवासु निरता अभूवन्। पुत्राणां पुत्रीणाञ्च यथाकालं विवाहादयः संस्काराः सम्पन्नाः। अनुजानां पुत्राणां सम्बन्धिनाञ्च अथ च समस्त-पारिवारिकघटनानाम् आधारभूतमेतद् गृहमासीत्। सर्वे आयोजनेषु भ्रमणार्थं वा समागच्छन्। परिवारे कदापि कुत्रापि असहजता असहिष्णुता वा नानुभूता। यतोऽत्र विद्यमाना आसीत् आचार्यानी, अन्नपूर्णा 'अम्माजी'ति पदेनालङ्कृता, परिवारस्य केन्द्रभूता। राजरोगेण प्रपीडिताऽपि सा स्वव्यवहारेण शोभनतया गार्हस्थ्यमर्यादां पालितवती पञ्चषष्टिवर्षाणि यावत् स्वजिजीविषां रक्षितवती। ततः मकरसंक्रान्तौ सा ब्रह्मलोकातिथिर्जातेति ब्रह्मदेव एकाकी समजायत। एतस्या अभावेन एष पक्षाघातमिवान्वभवत्। अस्य सा निश्चिन्तता समाप्ता या खलु पत्न्याः सहयोगेन प्राप्तासीत्। जीवनस्य तुरीयावस्थायाम् अर्धाङ्गिन्या सहधर्मिण्याः सर्वथा परमावश्यकता भवति। वृद्धावस्थायामेकाकिजीवनं महत् कष्टकरं भवति, तदुपरि यदि पुत्रस्य वध्वाश्च व्यवहारः असह्यो भवति, तदा तु जीवनं कण्टकाकीर्णं जायते।

आचार्यस्य एक एव पुत्रः सहैव निवसतीति समस्तो भारः तदुपरि समागतः। अतः वात्सल्यभावेन स्वजीवने शान्तिमानेतुं च परिवार-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सञ्चालने स एवाधिकृतः। न जाने कलियुगस्य प्रभाव अथवा पाश्चात्य-शिक्षायाः प्रभावः अद्यतनीया वधूः गार्हस्थ्यजीवन-यापने सुखं नानुभूय तद् भारं मत्वा कष्टमिवानुभवति। संयुक्तपरिवारप्रथा सामाजिक-पारिवारिकपरम्पराञ्च एवं विस्मृत्य एकाकिजीवनमस्यै रोचते। नारीणाम् अलङ्कारभूताः त्यागसमर्पणादयो भावा पलायिता इव। यदि साऽनुभवति यदस्या जीवनं रसवती-सन्धानाय विशालगृहस्य स्वच्छतायै वा न, तदा तु गार्हस्थ्यजीवनं व्यर्थमेव। जीवने सुखाय न केवलं शरीरमावश्यकं, तन्महत्त्वं तु किञ्चित्कालपर्यन्तमेव, तत्पश्चात् शक्तयः क्षमताश्च वाञ्छनीया भवन्ति। तास्तु श्वसुरगृहे परिवारपरम्परया प्राप्यन्ते। परं सम्प्रति तु मन्यते यत् प्राचीनाः परम्पराः न युगानुरूपाः, श्वसुरौ भारस्वरूपौ, इति महती विडम्बना।

विशालगृहेऽस्मिन् ब्रह्मदेवसमीपे एकः कक्षः स्वाधीत-लिखित-पुस्तकानां कृते पुस्तकालयत्वेन आसीत्, समक्षं च प्रघणोऽलिन्दो वा पादपैः लताभिश्चावृता आसीत्। एतत् स्थानमेवासीत् ब्रह्मदेवस्य चिन्तनाध्ययनस्थलम्।

एकदा वध्वाः सन्देशः प्राप्तः यत्भवत्सनाथितः कक्षः अलिन्दश्च पुस्तकैराच्छादितः धूलिधूसरितः, पत्रावलीभिः कर्गदैश्च संलिप्तः न शोभादायकः। सम्भ्रान्ताः जनाः कार्यालयाधिकारिणश्च समागच्छन्ति। भवतां वार्धक्यवासांसि अन्यानि वस्तूनि च नवदृष्टिं (न्यू लुक) न प्रयच्छन्ति। अतः भवत्कृते भवनस्य पृष्ठभागे यः बहिः कक्षः सेवकादिवासत्वेन भवता निर्मितः स एवोपयुक्तः। गृहस्य अस्माकञ्च मानमर्यादायाः सुरक्षायाश्च कृते एतन्निवेदनं वर्तते।

ब्रह्मदेवस्तु सर्वथा विस्मितः। विचारसरणौ मनः समान्दोलितम्। 'स्थानभ्रष्टाः न शोभन्ते' इति विचार्य समस्ता शोभा, वैदुषी, सारस्वतव्यस्ततादयः पलायिता इव। निर्णयाधिकारस्तु बलादाच्छिन्न इव।

एकस्मिन् रविवासरे पुत्रः वधूः च समागत्यावदतां यत्कष्टं न



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवेदिति भवतः साहाय्यमावां करिष्यावः। अथच अनुमतिं स्वीकृतिं विनैव आजीवनसञ्चितसम्पत्तिभूतानि पुस्तकानि पत्रावल्यश्च अन्यानि सर्वाणि लेखनोपकरणानि च निर्दयतया समाकृष्य कर्पटखण्डेषु यथा तथा निर्बध्य बहिः कक्षे प्रेषितानि। कानिचिच्च इतस्ततः विकीर्णानि। आचार्यश्रीकेन खगादिभिः इतस्ततः क्रियप्रमाणं मालिन्यमवरोद्धुं पुस्तकानां मध्ये सरसघृतस्य कर्गदसम्पुटे एको नीडः स्थापितः यत्र च चटकानां सन्ततिक्रमः सततं चलति स्म, तदपि अद्य भूमिसात् जातम्। चटकाद्वयी इतस्ततः कूजन्ती तत्रैव चंक्रम्यमाणा उड्डीयते स्म। देवचित्राणि, छत्रं, जलपात्रं, उपानहौ.....अथ च यत्किमपि वधूदृष्ट्या प्राचीनमासीत् तत्सर्वं ध्वस्तं निष्कासितं वा। ....अविलम्बमेव तत्र समागतानि अभिनेतॄणां विभिन्नकुत्सितमुद्रासु चित्राणि अभिनेत्रीणा-मर्धनग्नचित्राणि च। एतत्सर्वं साश्रुनेत्राभ्यां दर्शं दर्शं ब्रह्मदेवस्य मनः स्तब्धं, परं का गतिः?

पुत्रस्य वध्वाश्च मनस्तोषाय पारिवारिक-शान्त्यै च आचार्यो बहिःकक्षं प्रविष्टः। यद्यपि तत्रत्या व्यवस्था न शोभाकरी नाप्यनुकूला तथापि यथाकथञ्चित् विस्थापितजीवनयापनं कर्तुं तत्परोऽभूत्। अपरतः उपेक्षादृष्टिरपि वर्धमानासीत्। या खलु महत्कष्टकरी परं का गतिः?

पूर्वन्तु प्रातराशभोजनादिकं गृहस्यान्तर्वर्तिनि अलिन्दे काष्ठफलके (डाइनिंग टेबिल) परिवारसदस्यैः सह ससम्मानं परिवेषितं प्राप्यते स्म। सम्प्रति तु यत् किञ्चिद् शुद्धमशुद्धं वा, सरसं नीरसं वा, हरितं शुष्कं वा, प्रत्यग्रं पर्युषितं वा, रुचिकरं अरुचिकरं वा प्रेष्यते तदेव मौनभावेन गृह्यते स्म। शनैः शनैः जीर्णानि पात्राणि शीर्णानि वासांसि, दीर्णानि आच्छादनानि एव शोभादायकानि जातानि। तानि सर्वाणि मलिनानि अपि जातानि, परमेतत्सर्वमवलोकनाय कस्यापि समीपे समय एव नासीत्।

शनैः शनैः प्रोफेसरमहोदस्य गृहं प्रति सक्रिया भूमिका समाप्ता



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अध्ययनक्रमेऽपि व्यवधानो जातः। नित्यं समययापनाय समीपवर्तिनि पार्के भ्रमणायागच्छत्। तत्रैव, वृद्धानां सतीर्थ्यानां एकः परिवारः संघटितः। तत्रैव धार्मिक–दार्शनिक–सामाजिक–राजनीतिकचर्चासु समययापनं सुखकरमभूत्। पुत्र–वधू–पौत्रादीनां सान्निध्येन यत्सुखं लभ्यते, तेन सर्वथा वञ्चित एव।

कदाचित् प्रच्छन्नरूपेण पौत्रः समागत्य गृह–गमनाय सस्नेहं आग्रहं करोति स्म। तद्वचस्तु सुखकरं, परं न गृहमिति पदम्। यत्र स्थितिः विवशतया औपचारिकतावशाद् वा भवति तत् किं गृहम्? नैव।

एकदा पौत्रः निवारितोऽपि तथाकथितम् आवासं समागच्छत्। तत्र सर्वं प्राचीनं जीर्णं, शीर्णं, त्रुटितं, स्फुटितं च समवलोक्य अन्तश्चिन्तितोऽभूत्।

अपरेद्युः पितामह–भोजनकाले पुनरायातः। अब्रवीत् पितामहम्— 'तात! एतानि सर्वाणि वस्तूनि सावधानतया तथा व्यवहरणीयानि, यथा खाद्यपात्रं मा त्रुटतु, आसन्दी खण्डिता न भवतु, चषकं न भिनत्तु, आच्छादनादयः न स्फुटन्तु, आश्रयभूतः, जीर्णः दण्डः न भग्नो भवतु।'

पितामहस्तु सर्वं श्रुत्वा विस्मितोऽभूत् अचिन्तयच्च किमेष मम प्रियः पौत्रोऽपि पुत्रमनुवदति। अपृच्छत्—

'किमेवं वदसि वत्स?'

'एवमेव'–गम्भीरतया सोऽवदत्। 'व्यचिन्तयमहं यद् भविष्यत्काले मम पितुः कृतेऽपि एतान्येव वस्तूनि वाञ्छनीयानि भविष्यन्ति। मम पिताऽपि यदा वृद्धो भविष्यति, सोऽपि एतैरेव वस्तुभिः सह अत्रैव निवसिष्यति।'

शिशिरर्तौ वर्षेऽस्मिन् शैत्यमधिकं जातम्। शीतप्रपीडितो ब्रह्मदेवः तूलाच्छादनेन सह ऊर्णोत्तरीयवस्त्रमयाचत। वधूः वक्रोक्त्या व्याक्षिपत्। वारम्वारं कृतेन आग्रहेण संत्रस्तः पुत्रः जीर्णोर्णं प्रावारकं प्रेषितवान् स्वसुतमाध्यमेन। तत्सुतः स्वाध्ययनकक्षे गत्वा प्रावारकस्यार्द्धच्छेदनं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृत्वा पितामहाय प्रादात्। बालस्य चातुर्यं दृष्ट्वा पुत्रः प्रसन्नतामन्वभवत्। अपृच्छच्च अर्द्धं तु अग्रिमवर्षाय संरक्षितं किम्?

नहि नहि पितः? चिन्तयाम्यहं यत् कदाचित् मम पिताऽपि वृद्धो भविष्यति। तदा तत्कृते एष प्रावारकस्य अर्द्धभागो भविष्यतीति।

विस्मयान्विता दम्पती परस्परमवलोकितवन्तौ। बालस्य बुद्ध्या गौरवान्वितौ पितरौ स्वत्रुट्या व्यवहारेण च दुःखितौ। अन्येद्युः तौ बालस्य पितामहसमीपे गत्वा सपश्चात्तापं प्रायश्चित्तं विधाय पितरम् आचार्यं ब्रह्मदेवं सादरं सप्रश्रयमानीय पूर्ववत् निर्धारित–कक्षावासे न्यवासयत्। आचार्यवर्यस्य सारस्वतगतिविधियः पुनः प्रचलिताः। जीवनं पुनः सुखमयमभूदिति।

ए–६५, जनता कॉलोनी,
आदर्शनगरम्, जयपुरम्,
राजस्थान प्रदेशः

—:: ० ::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# तेनालीरामः

—आचार्यो डॉ० केशवरामशर्मा

तेनालीरामोऽतीवबुद्धिमान् प्रत्युत्पन्नमतिः परमकुशलश्चास्ति। स विजयनगरनरेशस्य महाराज कृष्णदेवस्य परमप्रियः मन्त्रिपदविभूषितश्च वर्तते। प्रायः सर्वे मन्त्रिणस्तं शत्रुभावेन पश्यन्ति। एकदा सभायां तस्योष्णीषं दृष्ट्वा उत्कण्ठितो नृपः कथयति—भो तेनालीराम! तवोष्णीषः सुबन्धितः परमसुगठितश्च तवेवाऽस्याः सभायाः शोभावृद्धिं करोति। शिवकुमार इत्याख्य एको मन्त्री इदं श्रुत्वा ईर्ष्याभावेन दग्धो नृपाय निवेदयति—"महाराज! उष्णीषबन्धने किं कौशलम्? श्वो भवान् ममोष्णीषस्य बन्धनमपि पश्यतु। तस्य सौष्ठवं दृष्ट्वा यूयं सर्वे तेनाली-रामं सर्वथा विस्मरिष्यथ।

सर्वे सभासदाः—"वयमिमां प्रतियोगितां दृष्टुमिच्छामः। महाराज! कृपया एतदर्थं पुरस्कारस्यापि घोषणां कुरु। नगरवासिनोऽपि पश्यन्त्व-न्योर्हस्तकौशलम्। नृप एतदर्थं शतरूप्यकाणि निर्धारयति। तेनालीरामः शान्तस्तूष्णीञ्च तिष्ठति। सभासदाः प्रसन्ना भूत्वा शिवकुमारस्य उत्सावर्धनं कुर्वन्ति।

अपरे द्युः तेनालीरामः पूर्ववदेव तदेवोष्णीषं शिरसि निधाय सभायामागच्छति। शिवकुमारस्तु पीतवर्णेन कौशेयनिर्मितेन सुबद्धेन उष्णीषेण सुशोभितस्तत्राऽऽगच्छति। तं दृष्ट्वा सर्वे प्रसीदन्ति। अघोषितोऽपि स विजयी पुरस्कारार्हश्चास्ति। यावत् नृपो घोषणां करोति, तावत् तेनालीरामः स्वयमेव स्वपराजयं स्वीकरोति। स शिवकुमारस्य पार्श्वं गत्वा निवेदयति, यत्सोऽपि तस्मात् उष्णीषबन्धनस्य शिक्षां ग्रहीतुमिच्छति। तत्क्षणमेव स स्वोष्णीषमपसार्य तस्य पुरत एतदर्थं प्रार्थनां करोति। शिवकुमारश्चोदासीनभावेन तमपसारयति। नृपोऽपि शिवकुमारं तेनालीरामस्य उष्णीषबन्धनार्थं निवेदयति, किन्तु स तूष्णीमेव तिष्ठति।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अस्मिन्नन्तराले तेनालीरामस्तस्यापि उष्णीषमपसार्य, उन्मुक्तं कृत्वा तस्य पुनर्बन्धनाय निवेदयति। तस्य धृष्टतया क्रुद्धः शिवकुमारः तेनालीरामस्य प्रताडनां करोति। सर्वे पार्षदास्तस्य व्यवहारेण क्षुब्धा नृपं तेनालीरामस्य दण्डविधानार्थं प्रार्थनां कुर्वन्ति। नृपेण पृष्टः सन् स कथयति—"श्रीमन्! प्रतियोगिता उष्णीषस्य महार्घताया नास्ति, अपितु तस्य बन्धनस्याऽस्ति। अतोऽहं स्वोष्णीषं पुनर्बध्नामि, तथैव शिवकुमारोऽपि करोतु। तदनन्तरं भवान् निर्णयं करिष्यति।" नृप एतदर्थमाज्ञापयति। तेनालीरामः स्वोष्णीषं साधयति, किन्तु शिवकुमारः स्वपराजयमङ्गीकरोति। महाराजस्तस्य बुद्धिमत्तां प्रशंसति, तस्मै विजयसूचकानि शतरूप्यकाण्यपि ददाति।

तेनालीरामस्य बुद्धिविलासेन नृपोऽतीव प्रसन्नोऽस्ति, किन्तु मन्त्रिणः पुनः-पुनः पराजिता भूत्वा तं प्रति द्रुह्यन्ति, येन केन प्रकारेण तस्य पराभवञ्चेच्छन्ति।

केनापि कारणेन विजयनगरनरेशस्य देवनगराधिपेन महाराजेन उदयसिंहेन सह शत्रुभावो वर्तते। यदा-कदा तयोः सैनिकाः परस्परं युद्धार्थं प्रस्तुता भवन्ति। शिवकुमारः स्वमित्राणां साहाय्येन तेनालीरामस्य विरुद्धमेकं षड्यन्त्रं करोति। स स्वप्रगाढमित्रं रामानन्दं तस्य षड्यन्त्रस्य सूत्रधारं विधाय स्वप्रयोजनं साधयति। तेन नोदितो रामानन्द एकदा निभृतरूपेण नृपस्य समीपं गत्वा तं निवेदयति—"महाराज! असौ तेनालीरामः उदयसिंहस्य गुप्तचरोऽस्ति। सोऽस्माकं सैन्यबलस्य रहस्यं गुप्तरूपेण तस्मै निवेदयति।" यदा नृपस्तस्य विश्वासं न करोति, तदा स कथयति—"श्रीमन्! मया स्वविश्वासपात्रेण दूतेन रहस्यमिदं ज्ञातम्। अहं भवतो विश्वासपात्रं सेवकोऽत एव निवेदयामि।"

अवसरं लब्ध्वा अन्यैर्मन्त्रिभिरपि एकमेकं कृत्वा नृपाय इत्थमेव तस्य पिशुनता कृता। पुनः पुनः दुर्वादेन खिन्नो नृपस्तेनालीरामस्य दण्डविधानार्थं विवशो भवति। महाराजकृष्णदेवः तेनालीमाहूय कथयति—"त्वम् उदयसिंहस्य हितैषी भूत्वाऽत्र किङ्करोषि? गच्छन्



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तस्यैव समीपम्। त्वं मम स्नेहभाजनमासीः, अतोऽहं तुभ्यं मृत्युदण्डं न ददामि। श्वः पर्यन्तं भवान् मम राज्याद्बहिर्गच्छतु। अहमस्मिन् विषये किमपि श्रोतुं नेच्छामि। गच्छतु भवान्।''

नृपस्य व्यवहारं दृष्ट्वा तेनाली अतीव खिन्नो भूत्वा, विजयनगरस्य भूमिं सादरं प्रणम्य देवनगरं प्रति गच्छति। स्वस्य महत्पीडामपमानञ्च विस्मृत्य स प्रसन्नवदन उदयसिंहस्य सभां गच्छति। नृपेण तस्य परिचयः पृष्टः, तदा स श्लोकचतुष्टयं पठति—

विजयनगराधीशः कृष्णदेवो महामतिः।
तस्य विश्वासपात्रोऽहं तेनाली नामको जनः॥
प्रतिवेशी भवान् तस्य गुणी शीलयुतः शुभः।
सोऽपि प्रशंसको नित्यं स्नेहभावेन पश्यति॥
उच्चवंशोद्भवः श्रीमन्! संस्काराश्च तथा शुभाः।
तथैव सन्ति तस्यापि शुभः शुभेन शोभते॥
प्रेषितो मित्रभावेन कल्याणाय जनस्य वै।
ग्रहाणोपायनं श्रीमन्! मैत्रीभावस्य सूचकम्॥

इति पठित्वा तेनालीरामस्तस्मै पञ्चसहस्त्ररूप्यकाणि समर्पयति।

उदयसिंहो धनं दत्वा तस्मै विशिष्टासनं ददाति। कथयति च यत्तस्य गुप्तचरास्तस्मै अन्यथैव सन्देशान् प्रेषयन्ति। ते कथयन्ति यत् कृष्णदेवः सैन्यसंगठने तत्परोऽस्ति, शस्त्रास्त्रयोर्निर्माणे च संलग्नोऽस्ति। स कदापि अकस्मादेवाऽऽक्रमणं कर्तुमुद्यतोऽस्ति।

तेनालीरामः—''एतन्मिथ्या प्रचारोऽस्ति। अस्माकं गुप्तचरा अप्यस्मान् इत्थमेव समाचारान् ददति। बहवो जना वृथैव दुष्प्रचारं कुर्वन्ति। एतद् दृष्ट्वैवाहमत्र आगतोऽस्मि। कृपया भवानपि इत्थमेव स्वदूतं प्रेषयतु। भवतः पत्रेण सह अहमपि स्वपत्रं तस्मै दूताय एव दास्यामि। पश्यतु च भवान् तस्य प्रतिफलम्।''

उदयसिंहः सन्तुष्टो भवति। स स्वपत्रेण सह तेनालीरामस्य पत्रम्,



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपायनरूपेण च दशसहस्त्ररूप्यकाणि कृष्णदेवस्य समीपं प्रेषयति। पत्रं गृहीत्वा कृष्णदेवः परमप्रसन्नो भवति। स दूताय विशेषसम्मानं पुरस्कारञ्च ददाति। तेन सह 'सुशील' नामधेयमेकं मन्त्रिणमनेकैरुपायनैः सह प्रेषयति। उदयसिंहाय निवेदयति च यत्स तेनालीराममविलम्बं तस्य सकाशं प्रेषयतु। स्वयमपि च शीघ्रमेव नृपेण सह वार्तालापं कर्तुमुत्सुको भवति।

सुशीलस्यागमनेन देवनगराधिपोऽतीवो प्रसन्नो भवति। स कृष्ण-देवेन सह पारस्परिकसंवादस्य कार्यक्रमं निर्धारयति। तैनालीरामं सुशीलञ्च सबहुमानं प्रस्थानस्याऽऽज्ञां ददाति।

तेनालीरामं पुनः स्वसभायां प्राप्य नृपः स्नेहेन तमाश्लिषति, बहुधा सम्मानञ्च यच्छति। सर्वे सभासदाः तस्मात् क्षमायाचनां कुर्वन्ति। स पूर्ववदेव शान्तो विनम्रश्च तिष्ठति।

**धीरा विनम्राः सरला गुणाढ्याः**
**दुःखं नु तेभ्यः शुभलाभकारि।**
**लब्ध्वापि कष्टं नु सदैव नम्राः**
**देशस्य लोकस्य हितं वरेण्यम्॥**

बी–५९, वीथि संख्या–३,
उत्तरी छज्जूपुरम्, दिल्ली–११००९४

—:: ०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अहो! लुब्धः प्रतारितः

—ओम्प्रकाशठाकुरः

**उत्तुङ्गशिखरोऽपि त्वं**
**भो खर्जूर! न शोभसे।**
**छाया न हरते तापं**
**दूरवर्ति च ते फलम्॥**

रामनरेशो यदा यदा खर्जूरवनस्य पार्श्वतो याति स्म, स सस्पृहं तस्य मधुरमधुराणि फलानि वीक्षते स्म। एकस्मिन्नहनि साहसं कृत्वाऽसौ सरलोच्छ्रायमेकं खर्जूरपादपमारूढवान्। हस्तेनैकेन तरुमवलम्ब्यापरेण हस्तेन फलानि त्रोटयितुं भूमौ च पातयितुमुपचक्रमे। श्रान्तो भूत्वा यदाऽसौ नीचैरवतर्तुमियेष, तस्योत्साहो विलयं गतः। भूमितलमति विप्रकृष्टमालक्ष्य तस्य मतिः कुण्ठत्वमाप। पतनभयात् स कथञ्चित् आत्मानं स्थिरीकृत्य विनतिं कृतवान्–यद्यहं सकुशलं भूमाववतरामि, देवालये शतं दास्यामि।

ततः कथञ्चिद् धैर्यमाश्रित्य द्वाभ्यां हस्ताभ्यां वलयीकृतपादपः अधोऽधः तरुपर्वसु पादविन्यासं कुर्वन् तरोरर्धभागमुपेयिवान्।

इदानीमसावाशान्वित आसीत्। उत्साहतरङ्गैराप्लुतः सन्नचिन्तयत्, भूमितल–प्रापणं नातिदुष्करम्। देवालयेऽर्धशतमेव पर्याप्तम्, किं शतप्रदानेन?

शनैश्शनैरधोऽभिमुखं सरतस्तस्य यदा चतुर्थांशोऽवाशिष्यत, स विचारयामास, नूनमहं साहसवान्। सर्वमिदमुत्साहावलम्बनेन सम्भवि जातम्। देवमन्दिरे तु पञ्चविंशतिमुद्राप्रदानमेवालम्।

**क्षणे क्षणे परिवर्तनशीला**
**स्वार्थे दर्शयते तत्परताम्।**



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कपिरिव चापल्यं भजमाना

भवति हि दुर्जनचेतोवृत्तिः ॥

ततः क्रमेणावरोहणं कुर्वन् स भूमितलं प्राप। प्रथममसौ कञ्चित् कालं विश्रम्यात्मानं स्वस्थचित्तमकार्षीत्। तदनन्तरं भूमिपतितानि खर्जूरफलानि विचित्य संचित्य च गृहाभिमुखं प्रचलन् चिन्तितवान्-सर्वेश्वराय भगवते किं मुद्राप्रदानेन? परमहमेकं विप्रं गृहे समाहूय भोजनं कारयामि। एतेन मम संकल्पः पूर्णतां यायात्। गृहं प्राप्य स गृहिणीमुवाच-अहमेकं विप्रं गृहे प्रेषयिष्यामि। भोजनं कारयित्वा तस्मै समुचितां दक्षिणां दास्यसि।

अथ रामनरेशः कस्यचिद् ब्रह्मणस्यान्वेषणार्थे नगरे बभ्राम। असौ तादृशं ब्राह्मणं गवेषते स्म, अल्पेन भोजनेन यस्य जठरं भ्रियेत।

आकस्मात्तेन कश्चिद् संन्यस्ताङ्गवस्त्रः भाले कृततिलकः ब्राह्मणो व्यलोकि, यः पुनः पुनः जृम्भां विधत्ते स्म। तं वीक्ष्य रामनरेशोऽ-चिन्तयत्-एष ब्राह्मणः कृतभोजनो लक्ष्यते। यद्येष निमन्त्र्यते, स्वल्पं खादिष्यति।

इत्यालोच्य स तं विप्रं भोजनाय न्यमन्त्रयत् गृहे च प्रैषयत्। सोऽपि मुदितमनास्तत्सदनं प्राप्तः। गृहमुपागतं ब्राह्मणं प्रेक्ष्य गृहिणी सादरं तमासन उपावेशयत्। ततः सा पायस-पूरिका-शाक-दधि-नवनीतादि-समन्वितं भोजनमुपहृतवती। भोजनान्ते वस्त्रयुगलमेकां स्वर्णमुद्रां च दक्षिणारूपेणार्पितवती।

यदा सायंकाले रामनरेशो गृहं प्रत्यावृत्तः, स ब्राह्मणभोजने दर्शितौदार्यां भार्यां भर्त्सयमानः सद्यः ब्राह्मणगृहं प्रति प्रचचाल। कोपेन रक्ताभं तस्य वदनं निरीक्ष्य साश्रुनयना ब्राह्मणी तमाह, भो यजमान!



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्वया मम पत्ये कीदृशं भोजनं दत्तम्? तव गृहादुपेतस्य तस्य दशा शोचनीयतां गता शिरोवेदनया उदरपीडया च क्लिश्यन्नसौ चिकित्सालये प्रवेशितः। तस्य किं भवेद्–इति ब्रुवाणा सा भूयो रुरोद।

ब्राह्मणगेहिन्याः कृतकविलापं सत्यं मन्यमाना रामनरेशश्चौल–कोषादिकां सुवर्णमुद्रां निष्कास्य तस्या हस्ते विन्यस्याभाषत नैतत् त्वया कस्यचिदाख्येयम् यद् रामनरेशस्य गृहे कृतेन भोजनेन ब्राह्मणो रुजाक्रान्तोऽभवत्। तस्योपचारस्त्वया कुशलेन भिषजा कारयितव्यः।

ततः प्रस्थाय दूयमानेन मनसाऽऽत्मानं निन्दन् अभणत्–आस्वादितमद्य मया लोभस्य कटुकविपाकं फलम्।

**लुब्धो जनो न लभते मानं**
**भवति हास्यपात्रं स जनानाम्।**
**स्वार्थः सिध्यति न च परमार्थः**
**अतो लोभवृत्तिस्त्यजनीया॥**

डी–७५७, सरस्वती विहारः,
दिल्ली–११००३४

—:: ०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# न बालिका निरक्षरा

—डॉ० सत्यपालः शर्मा

समाचारपत्रेऽद्य भारतीय–प्राशनिक–सेवा–परीक्षायाः परिणामो घोषितोऽस्ति। तत्र निजग्रामस्य विलक्षणा–नाम कन्यायाश्चयनमवलोक्य ग्राम–प्रधानः श्रद्धावीरो गङ्गादासस्य गृहमुपेत्य तं कोटिशो वर्धापनैर्वर्धापयति। निरक्षरः कृषिकर्मकरश्च गङ्गादासस्तमभिनन्दयन् पृच्छति—प्रधानवर्य! धन्यभाग्योऽहम्, यदद्य भवद्दर्शनं जातम्। प्रधानः प्रसन्नवदनः पुनरवोचत्—सौभाग्यवन्तो वयमद्य जाता यद्......"कथं न झटिति वदसि? महदस्ति मे कौतूहलम्, वर्धत औत्कण्ठ्यमुत्तरोत्तरम्" इति पृष्टवति गङ्गादासे पुनराह—अरे भारतीय–प्राशनिक–सेवायां पदं प्राप्तवती साऽस्माकं दुहिता विलक्षणा क्व वर्तते? धन्योऽसि गङ्गादास! यस्य पुत्रीयं विलक्षणा। धन्या सा जननी यया सूता सुता सुतरां विलक्षणा विलक्षणा। विधातः! वर्धतां वर्धापनार्हा वरेण्यवैशिष्ट्या।

ज्ञातवृत्तो गङ्गादासो विनयविनतवदनोऽवोचत्—प्रधानवर्य! वस्तुतो वर्धापनार्हस्तु विद्वन्मूर्धन्यः स्वनामधन्यो विद्वद्वन्द्यो वन्द्यचरितो गुरुपदमन्वर्थं कुर्वाणो यशः सौरभं तन्वानः शारदाप्रकाशनामा अध्यापकः। 'हे गङ्गादास! विस्तरेण कथनमपेक्ष्यते'—इत्येवमुक्ते प्रधानेन गङ्गादासः पुनरुक्तवान्—हे ग्रामप्रधान! किमत्र कथनेन? प्रमोदं नियन्तुमक्षमोऽहं दिदृक्षुरस्मि गुरुवर्यम्। अतो नो चेत् कार्यातिपातस्तदा तत्रैव संलपाः। इत्येवं वार्तालापपरौ सत्वरं गुरुवर्यस्य निवासभूमिमुपेतौ।

यथोचितमभिनन्द्य तावुभौ प्रष्टुकामः शारदाप्रकाशः प्रोक्तवान्—उत्फुल्लवदनौ भवन्तौ किमपि निगूहत इव मत्तः, अतः सत्वरमभिधीयतामागमनप्रयोजनम्। ज्ञाते च वृत्ते गुरुवर्य! पाकगृहादादाय मिष्टान्नं तयोरग्रे कुर्वन् वर्धापनैस्तथाऽऽशीर्वचोभिस्तौ समवर्धयत्। ताववदताम् गुरुवर्याः! अद्य अस्माकं दुहिता गङ्गादासस्य सुता विलक्षणचरिता विलक्षणा भारतीय–प्राशासिकसेवायाम् पदं कृत्वा अस्माकं गौरवं गरीयः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कृतवती। विस्तरेणाधिगम्य तदाऽऽनन्दाश्रुभिः परिष्णात इव, वारिपूरित-वारिदवृन्दवदानन्दाश्रुजलधारासारैर्वषन्निव विद्यानिष्णातः शारदाप्रकाशो हर्षातिरेकेण प्रकाशमान इव प्रसादयन्निव स्वगिरा सर्वान् अवादीत्-सुतरां धन्योऽहम्। जीवनस्य स्वादुतमं फलमास्वादितं मयाऽद्य। अनिर्वचनीयो मे प्रमोदः। यतो ह्युक्तमपि श्रीहरिपद्मनाभशास्त्रिणा श्रीहरिचरिते महाकाव्ये—

**स्वान्तेवास्युत्कर्षः स्वोत्कर्षतोऽपि हर्षाय।**

ततश्च यावदसावग्रे वक्तुं प्रचक्रमे तावदेव विलक्षणाऽपि गुरुवर्य-मेव सर्वप्रथमं मधुरसमाचारं श्रावयितुकामा प्राप्नोत्। सर्वथाऽऽमोदमाना पूर्णकामा सम्मानयन्निव सर्वान् अभिनन्द्य गुरुचरणावुपेत्य मिष्टान्नमग्रे कुर्वन्ती न्यवेदयत्-भवदाशीराशिभिः प्रेरणाश्रेणीभिश्चेयं भवच्छिष्या एतावतीमुत्कृष्टावस्थामाप्तवती। अतो भवानेव सर्वप्रथममभिवन्द्यः श्रेयोभाक् चापि। अतो भूयो भूयोऽभिवादनम् कोटिशो वर्धापनम्। यतो हि—

**कार्यकर्तुश्चतुर्थांशो भागत्रयं तथेरितुः।**
**कर्तारस्तु सहस्राणि प्रेरयिता सुदुर्लभः॥**

अतः प्रथमं भवन्तो वन्द्याः। ततश्चेमे मे पितृपादा मया पुनः पुनर्नम्या, येषां त्यागेन दुःशक्यमिदं शक्यमभूत्। ग्राम-प्रधानम्प्रति पश्यन्ती नमस्कुर्वन्ती प्रोवाच-पितृव्य! मम साफल्येन मुदिता भवन्तोऽपि कथं न मिष्टान्नमपि गृह्णन्ति। 'हर्षातिरेकेण विस्मृतमिदं मया पुत्रि! अयं गृह्णामि, परं कथमिदं, दुःशक्यं शक्यं भवितुमशक्नोत्। साफल्य-वृत्तान्तो मे शुश्रूषां वर्धयति उत्तरोत्तरम्। सर्वेषु मिष्टान्नं वित्तीर्य आसन्दी-मासाद्य सा कथयितुमारेभे—

पितृव्य! जानात्येव भवान् यत् कनीयान् मे भ्राता मत्तः पूर्वं विद्यालये पित्रा प्रवेशितः। पठितुमाग्रहं कुर्वाणा पित्राहमुक्ता—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**माता त्वदीया पठिता न पुत्रि!**
**न चापि मातुर्जननी तथास्ति।**
**लसन्ति पुत्र्यो गृहमध्य एव**
**न याहि विद्यालयमेव व्यर्थम्॥**

पितुर्मुखादेवमधिगतनैराश्याहं पुनः मातरमुपगम्य—"मातः! पठितुकामाहं गच्छामि विद्यालयम्?" मम कथनसमकालमेव अपरिचिन्तयन्त्या मात्राऽपि मन्ये पूर्वतो निर्णीतमिव वाक्यमेवमुक्तम्—

**माता न याता तव पाठशालां**
**तस्याश्च माताऽपि न साक्षराऽस्ति।**
**पुत्र्यो न योग्याः पठितुं समाजे**
**न याहि विद्यालयमेव पुत्रि॥**

उभयत नेति शृण्वत्या मया नाग्रे आग्रहः कृतः। गृहकार्येष्वेव च दत्तचित्ता जाता। एकदा गृह एव विस्मृत–मध्याह्नभोजनो मेऽनुजो विद्यालयं गतः। तदा भोजनं प्रापयितुं मात्रा मे आज्ञप्ताहम् गता तत्र। तत्रैव प्राप्ता सुरलोकसुखमिवानुभवन्ती गुरुवर्येण परिचिताऽऽकारिताऽब्रुवम्—'भवतो विद्यालयो मनोरमः। तदा पठितुमुन्मुखं मन्मुखमवलोक्य पृष्टाऽहम्—"किं त्वं सज्जनस्य स्वसा? कथमद्यात्रावलोक्यसे? किं पठितुमभिलाषः?" तदा गुरुम्प्रति अवोचत्—हे गुरो! तदा स्वीकारोक्तौ नमिते शिरसि मया चक्षुर्निर्गतैरश्रुभिर्मे मुखं क्लेदितम् अनुदित्वैव चाहं भवत्समीप उपविष्टा। अन्तर्दृष्ट्वा सर्वमवगम्य इव, हे पुत्रि! चिन्तां मा कुरु। सर्वं साधयिष्यति सिद्धिदो विनायकः। इति प्रोच्य गृहमहं विसर्जिता।

अग्रेद्युरेव गृहमासाद्य गुरुरभिहितवान्—हे महाशय! समाजस्यादर्शाः सुतरां पालनीयाः, नात्र कोऽपि विप्रतिपतिः। परमनर्थकारूढयस्तु त्याज्या एव। यथोक्तं विष्णुशर्मणा—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


**उद्योगिनं पुरुष सिंहमुपैति लक्ष्मी-**
**दैवेन हि देयमिति का पुरुषा वदन्ति।**

अपि च

**तातस्य कूपोऽयमिति ब्रुवाणाः**
**क्षारं जलं कापुरुषाः पिबन्ति।**

गुरोरिदं वाक्यं न जानन्तावेव प्रार्थयतां मम पितरौ—हे महाशय! न ज्ञातं सम्यक्। किमधिकृत्य उच्यते भवता? "पुत्रतोऽपि गरीयसी पुत्री यतो न पाठिता" एतदधिकृत्यैव मे वचांसि। इत्येवं कथयत्येव गुरौ मात्रोक्तम्—हे पण्डित! "कन्या परकीय एव अर्थः" इति सर्वैः स्वीक्रियते। ततः किं तयाऽध्ययनेन? तथा च स्वातन्त्र्यं नापेक्ष्यते स्त्रीषु यथोक्तं केनचित्—

**पिता रक्षति कौमारे भर्ता रक्षति यौवने।**
**पुत्रो रक्षति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति॥**

अतः किं तेषामध्ययनेनाध्यापनेन वा। अतो न पाठिता। तस्यास्तद्वचनमाकर्ण्य भूयो भवतोक्तम्—हे देवि! 'परकीय अर्थः अत्रार्थोऽस्ति यत् कन्या पत्ये प्रदेया। तत्र 'न पाठनस्य' न कोऽप्युल्लेखः। तथा च कालिदासस्य यद्वचनमुद्धरसि तस्य कालिदासस्य शकुन्तलाऽपि पठिताऽऽसित्। माता प्रोक्तवती भवतो गूढार्थां वाचं नाहं जानामि। यदहं जानामि तदुक्तं मया अग्रे यथाऽस्याः पित्रे रोचते। इति अभिधाय तूष्णीं स्थिता। तदा पितरं सम्बोध्यभवता उक्तम्—"हे गङ्गादास! किं ते वचनम्?"' पित्रोक्तं यत् वर्षेभ्योऽवलोकयामो नाधीयन्ते कन्या। अतो मयाऽपि नेयं विद्यालयं प्रेषिता। तदा भवता कथितम्—हे महाशय! शृणु—

**जानकी देवकी भामती सुस्त्रियो**
**वीरबाला मनुरिन्दिरा सन्निभाः।**



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**यत्र भूता वरा निश्चये साधिका**
**तत्र नारी कथं दुर्बला संज्ञिता ॥**

अपि च हे गङ्गादास! अस्माकं भारते तु पुरुषतः पूर्वं नार्यः पूज्या मताः। नामसु चापि पश्य—राधाकृष्णौ, सीतारामौ, लक्ष्मीनारायणौ— इत्यादिषु स्त्रिया नाम एव पूर्वम् प्रयुक्तम्। मनुस्मृतावपि भवान् पश्यतु—

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥**

अतो हे भद्रपुरुष! सर्वथा पाठनीया भवति कन्या। अनेन व्यक्तित्वस्य विकासो भवति तथा च समाज उन्नतिं करोति अथापि शृणु—

**योग्यः पुत्रः कुलं नित्यं समुद्धरति बुद्धितः।**
**पठिता पुत्री पुनर्लोके कुलद्वयं हि सर्वथा ॥**

अतो हे गङ्गादास! शिक्षालोक प्रसाराय अग्रे गच्छ। रूढितामापन्नो मरणासन्नोभवति। भवतः सुव्याख्यानैः तर्कैश्च ममायं पिता मम पाठनाय तत्परो जातस्तदा माताऽपि अग्रे आगत्य अवगुण्ठनवती एवोक्तवती— "हे आचार्य! गृहेऽपि तया समयो व्यर्थं न नीयते। अपठित्वाऽपि सा गुणान् शिक्षते गृहे। पठनेन एव किं भविता" इति। इदमाकर्ण्य तां सम्बोध्य उक्तं भवता—

**महानसे च शासनेऽथवा च सैन्यसङ्कटे**
**तथाऽन्तरिक्षयानके न साऽस्ति पृष्ठवर्तिनी।**
**समाजमानरक्षिका सदा च मार्गदर्शिका**
**सदैव गर्ववर्धिनी सदास्तु शिक्षया युता ॥**

हे गुरुदेव! तदा मम पितरावग्रेसृत्य भवाच्चरणयोः पतित्वाऽऽत्मदोषं स्वीकुर्वाणावुक्तवन्तौ—"हे महानुभाव! उन्मीलितानि नौ चक्षूंषि। नावामतः परमात्मनो दुहितरं शिक्षातो दूरतरं विधास्यावः। किमपि भवतु कथमपि जीवनं व्यत्येष्यावः, परं पुत्रवत् पाठयिष्यावो निजकन्यां



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विलक्षणाम्।'' इत्येवं भवतः प्रसादात् मात्रा पित्राऽनुमताहम् अप्रतिम-प्रभूतप्रयासैरहर्निशमभ्यासैर्भवतः प्राञ्जलशिक्षाभिरद्याहमीदृशामि साफल्यं लब्धवती अस्मि। हें पितृवर्याः! हे आचार्यवर्याः! हे पितृव्यवर्याः! आगच्छत सर्वे मिलित्वा प्रयतामहे येन पुत्र इव पुत्री अपि शिक्षालोकेनाऽऽलोकिता भवेत्। यथा हि—

**अधीत्य सुष्ठु शिष्टतां मनुष्यता विशिष्टतां,**
**गृहे गृहे दिने दिने विराजतां हि बालिका।**
**सुतावधो न जातुचित् करोतु कोऽपि भारते,**
**बालबालयोः समाजे साम्यमस्तु सर्वथा॥**

अपि च शिक्षाया आलोक एव उन्नतिद्वारम्। अतः एदर्थं सततं प्रयतामहै। आगच्छन्तु सततं कन्याशिक्षायै जागरिताः स्याम। यथा—

**पठन्तु देशकन्यका लसन्तु शिक्षया समा,**
**वदन्तु देशभारतीं चरन्तु दैवतं धियम्।**
**भणन्तु सत्यभाषितं रीतिनीतिसंयुतं,**
**विभातु देशभारतं न बालिका निरक्षरा॥**

हे पितृव्य! इदमेव साफल्यरहस्यम्। जतु जयतु शारदा!

जतु जयतु भारतम्!

संस्कृतप्राध्यापकः
निकट—भारद्वाज पब्लिक स्कूलः,
बाईपास रोडः, निसंग, करनालः (हरि०)

—:: ०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# कलियुगप्रभावः

—लक्ष्मीशर्मा

आसीदेको ब्राह्मणदेवः सः स्वकर्मनिष्ठः सदाचारवान् चासीत्। स्वजीविकार्यै सः काशिराजस्य गृहे पौरहित्यकार्यं करोति स्म, दानेषु प्रासवस्तूनि सत्यागं विनियुज्यते स्माऽपि तेन। सात्त्विककथाः सुप्रवचनानि च सुश्राव्य राजानं प्रजाश्च सः सात्त्विककार्ये प्रेरयति स्म पण्डितः। परं सर्वमिदं ब्राह्मणाचरितं कलिपुरुषाय सर्वथा न रोचते स्म यतो हि असत्य–दुराचार–पापाचार–वञ्चनाऽऽलस्यप्रभृतितामसिक–वृत्तिभिर्जीवनयापनमिति ब्राह्मणधर्मविरुद्धधर्मवानासीत् कलिः। अतो ब्राह्मणदेवस्य क्रियाकलापेषु कलिपुरुषस्य खेदः स्वाभाविक एव।

एकस्मिन् दिने कलिः मनुष्यरूपं धृत्वा ब्राह्मणदेवस्य पुरत आगतः तञ्च प्रोवाच–ब्राह्मणदेव! त्वं जानास्येवेदानीं कलियुगः प्रवर्तते तथापि त्वं किमर्थं सत्ययुगस्य प्रवचनानि जनान् श्रावयित्वा तान् सदाचारे प्रेरयसि? तवैतत् कार्यं युगविरोध्यस्ति। कलियुगे वसतिं वाञ्छति चेत् कलेरेव कथाः श्रावय जनान् आधिक्येनाडम्बरं शिक्षय।

कलेर्विवरणमाकर्ण्य ब्राह्मणदेवः प्रोवाच—भ्रातः! वयं वेदसनातनधर्मानुयायिनः, अतो वेदविहितमेव कार्यं कुर्मः सत्ययुगो भवतु कलियुगो वा, वयमस्य प्रभावे नागच्छामः।

कलिरुवाच—न हि भो ब्राह्मणदेव! कलावुषित्वा त्वं सत्ययुगस्य वार्तां कर्तुं न शक्नोषि। अहम् स्वयं कलिपुरुषोऽस्मि। मम नियमान् अद्यत्वे न कश्चिज्जनोऽतिक्रान्तुं शक्नोति। यदि त्वं स्वजीवनं सुखिनं कर्तुमिच्छसि तर्हि मम नियमान् पालय अन्यथा अतीव कष्टं भोक्ष्यसि। जानन्नपि ब्राह्मणदेवः कलिं प्रति पृष्टवान् यत्तव युगेऽस्माभिः कथं स्थातव्यम् एवं कथञ्च व्यवहृत्य तव राज्ये मनुष्यः सुखी भवितुमर्हति?

कलिरुत्ततार—मम नियमस्त्वयमेव यज्जना अनृतं भाषेयुः, अन्यान् हत्वापि बुभुक्षाशान्तिं कुर्युः वेदादिशास्त्राणि निन्दयन्तो वेदविहितधर्मान् तिरस्कुर्युः। परेषां स्त्रियो धनानि च स्वीयत्वेनैव निर्भीकमुभुञ्जेयुः, पवित्रतासदाचारयोः पोटलिकां निर्माय नगरनालेषु प्रवाहयेयुः। अनन्तरं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



किं क्रियेत तदपि श्रूयताम्—मातृपितृगुरूणां सेवामकृत्वा तेषां निन्दामवहेलनाञ्च कुर्युः। निर्दोषाणां वधादिकं कृत्वाऽहिंसामार्गेण राजनीतौ प्रविशेयुः। गोग्रासं भक्षयेयुः। अनेकानीतिपूर्णकार्याणां सरणीं निर्माय '**गिनिज**' इत्याख्ये पुस्तके स्वनाम लेखयेयुः। देशस्थजनैरर्जितानि धनानि स्वीयानि मत्वा बृहत्सु वित्तालयेषु सञ्चिन्वीयुः। एतावन्ति कार्याणि न कर्तुं शक्नुयाद्यः, सः कृतक्षौरीभूय परिव्राड् भवेत्। गृहस्थी (गृही) संन्यासी वा सर्वस्वं धनमिति मत्वा धनलक्ष्मीं प्राप्तुम् अधिकमेव प्रयतेत। आश्रमव्यवस्थादिकं सर्वमपि वनिताहस्त एव समर्पयेत्।

कलिपुरुषः स्ववार्तां विवृण्वन्नग्रेऽपि अवादीद्—ब्राह्मणदेव! कियन्तम् स्वमहिमानं कथयामि भवन्तं प्रति? यावच्छक्यं सत्ययुगस्य वैपरीत्यमेव मम युगस्य धर्मो विद्यते। मम युगे मम युगस्य नियम-पालनमेव धर्मः।

कलेर्व्याख्यानं श्रुत्वा ब्राह्मणदेवः कम्पायमानो भूत्वा अवदत्—नैव भो मूर्ख! नाहं करिष्ये तव धर्मपालनम्, अन्यत्र गत्वा कुत्रचित् स्वमहिमानं वर्णय। मदीये गृहे तव न किमपि स्थानम्।

पुनरुवाच कलिः—पश्य भो ब्राह्मण! अहन्तु तव हितायैवागत-वानस्मि। ममैमां वार्तां शृणु, राजानं प्रजाश्च मदीयामेव कथां श्रावय, अद्यतने युगे सत्ययुगस्य कथाः जीर्णा इव नितान्तमेवाप्रासंगिका वर्तन्ते। अत एव सर्वा अपि कथाः त्यक्त्वा मदीयाः कथा एव श्रावयितव्याः त्वया। अवेहि, अर्वाचीने काले जायमानाः बुद्धिमन्तः पण्डिताः रामायणभागवतसम्बन्धिकथानां मध्ये किं श्रावयन्ति, कीदृशञ्च आडम्बरं विरचयन्ति एवं कियन्तः सुखिनः सम्पन्नाश्च जाताः। यदि त्वयापिस्व-मात्मानं सुखिनं सम्पन्नञ्च कर्तुमिष्यते तर्हि ममैतद् वक्तव्यं गृहाण।

ब्राह्मणदेवः पुनरुक्तवान् यद्—अहं भवदीयां कथां श्रावयिष्याम्येव न। स्वाभिमतिमेतामन्यत्र प्रकटय।

कलिरुवाच—अस्तु, मह्यं न काऽपि चिन्ता, त्वद्धितमाकाङ्क्ष-माणोऽहमत्र त्वामवबोधयितुमागतः, अतः पुनरपि विचारय त्वमन्यथा पश्चात्तापमेव करणीयम्भविष्यति। द्रक्ष्याम्यहं यन्मयि सत्यपि कथं सात्त्विको भूत्वाऽस्मिन् कलौ युगे स्थास्यते त्वया?



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तम्ब्राह्मणं सत्पथात् स्खालयितुमिच्छता कलिनैकस्मिन् दिने सुन्दरं रूपं धृत्वा राजसभायां राजा पृष्टः—हे राजन् क्वास्ति ते पण्डितः? राजोवाच—नायं कालः पण्डितवर्यस्यागमनस्य। सम्प्रति तु सः स्वनित्य–कर्मनिरतः स्यात्। परम्, ब्रूह्येतद् इदानीं त्वं किमर्थं पृच्छसि ब्राह्मणदेवम्?

स उवाच—महाराज! तदीयैः पण्डितकृत्यैस्त्वमिदानीमपि परिचितो नाऽस्ति? पण्डितस्तु भवतां स महान् धूर्तोऽस्ति। कतिपयेभ्यो मासेभ्यः प्रतिदिनं पण्डितेन तेनाऽस्माकं मद्यशालामागत्य मद्यं पेपीयते, धने च याच्यमानेऽस्माभिः सत्येवं ब्रवीति यद् इदानीम् दक्षिणा न प्रदत्त राजभिः, यदा च प्रदास्यते तदैव तुभ्यमहं रूप्यकाणि प्रदास्यामि।

राजन्! विगतेऽहनीदमुक्तमासीत्तेन यदद्य राजा दक्षिणां प्रदास्यतीति। अतस्तस्माद् धनं गृहीतुमेव मयाऽत्रागत्य ब्राह्मणः पृच्छ्यते। राजोक्तवान्—अस्माकं पण्डितवर्यः मद्यं पिबतीति त्वसम्भवमेव। नास्ति स एतादृशः, त्वम् अनृतं भाषसे।

कलिः—महाराज! किमर्थमनृतमुद्येत मया? भवान्मयि विश्वसितु न वा परमेतत्तु सत्यमेवास्ति यत् भवतां पण्डितेन मद्यपानं क्रियते, धनञ्च तस्य मया गृहीतव्यमेव।

एतावच्छ्रुत्वाऽपि राजा कलिवाचमविश्वसन्, तं धूर्तञ्च मत्वा सभायाः बहिश्चकार।

परेद्युरपि कलिपुरुषः वधिकरूपं धृत्वा राजसभायां समागत्य पण्डितवर्यं पप्रच्छ। राज्ञा पृष्टम्–त्वं किमर्थं पृच्छसि पण्डितवर्यम्?

वधिकरुवाच—महाराज! भवतां पण्डितः प्रतिदिनम् अस्माकं वधिकस्थानात् मांसम् आनयति कथयति च महाराजः यदा दक्षिणां प्रदास्यति तदा ते धनं प्रदास्यामीति। अतीता बहवो मासाः, अद्य यावद् धनं न प्रदत्तन्तेन। अद्य भवतां समक्षमेव ग्रहीष्यामीति विचार्याऽ–त्रागतोऽहम्।

राजोवाच—अस्माकीनो ब्राह्मणदेवः मांसं खादति! नहि–नहि, अनृतम्, असम्भवम्, कर्मनिष्ठेन सदाचारवता च तेन विप्रेण कथं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


व्यवह्रिये तैः तादृशश्नीचव्यवहारः? कथं वा भोक्तुं शक्यते मांसन्तेन? अनृतम्भाषमानस्त्वं मां विरोधयसि सत्पण्डितात्? इति कथयन् राजा तं कलिं स्वपरिकरैः प्रताडयन् राजसभाया बहिः कारयामास।

तृतीयेऽहनि पुनः स दुष्टहृदयः कलिर्वेश्यारूपं धृत्वा राज्ञः पुरस्ताद् उपातिष्ठत् ब्राह्मणदेवविषये च प्रपच्छ।

राजा प्रोवाच—अस्माकं नगरस्य वाराङ्गनाऽसि त्वम्। ब्राह्मणदेवेन सह तव किं कार्यं सम्भवति?

वाराङ्गना प्रोवाच—महाराज! भवत्को ब्राह्मणो धूर्तश्छली च प्रतीयते मह्यम्। यतः, स आवर्षात् प्रतिदिनम् अस्मदीये वेश्यालये आगच्छति परं रूप्यकैकमपि नायच्छत् सः। याचिते च मया धने, एवं ब्रवीति—अहं राजपुरोहितोऽस्मि, अत राजा एव प्रदास्यति त्वां रूप्यकाणि, अद्य च राज्ञा दक्षिणाप्रदानान्तरमेव त्वां धनं प्रदास्यामीति कृत्वाऽहमाहूताऽऽसम्।

तदानीन्तु येन केन प्रकारेण सा वेश्या राज्याद् बहिष्कृता राज्ञा परमद्य तु सस्तस्या उक्तिषु विश्वस्तो जातः, चिन्तितञ्च तेन यद् यं सदाचारित्वेन द्विजत्वेन च सः पूजयति स्म, स विप्रस्तु महान् दुराचारी, मद्यपः, मांसभोजी च वर्तते। एतत्समः पातकी अन्यः को भवेदिति।

पूर्वन्तु राज्ञैतस्मै दुराचारिणे मृत्युदण्डं दातव्यमिति चिन्तितं परं ब्राह्मणहत्या-दोषभयात् तन्न कृत्वा राज्यनिष्कासनं तस्य कारितम्। बहुभिः प्रकारैः स विप्रः राजानं विश्वसितुमैच्छत्, परं सर्वं व्यर्थम्। अन्ततो विवशो भूत्वा ब्राह्मणदेवः सपरिवारो राज्यं परित्यज्य गृहात् निर्गतः। मार्गे कलिपुरुषः ब्राह्मणसमीपं गत्वा पप्रच्छ—ब्राह्मणदेव! किमिदानीमप्येवं मन्यसे यत् कलियुगे सत्येन सह जीवनं सम्भवतीति। स्वदेशे तिरस्कृतस्त्वं कुत्र गत्वा स्वं परिवारञ्च रक्षिष्यति?

इतः परम् अहं स्वपुत्रादिभिः सह कुत्र गत्वा जीवननिर्वाहं कुर्यामिति चिन्तया परिखिन्नो विप्रो विचारयत्येवम्—एतादृश्यां विषमपरिस्थितौ कलिना सह मया मैत्री करणीया, नो चेत् नान्यः पन्थाः मत्परिवारस्य मम च जीवनरक्षायाः?



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ततो ब्राह्मणदेवः कलिं प्रत्युवाच—भ्रात! इदानीं स्वीक्रियते मया तव सामर्थ्यम्, परिपाल्यते च ते वचनानि। इतः प्रभृति त्वत्कथाम् अतिक्रम्य नान्यथाऽहं जीवनं यापयितुं शक्नोमि, अतः शरणन्ते प्रपन्नोऽस्मि। इतः पालय मां पालय माम्।

एवं दृष्ट्वा कलिरुवाच—अहो! आगतदः साम्प्रतं सुमार्गे। मया पूर्वमेव बोधितमासीद् यत् मम वचनानि अनुमन्यस्व। अहन्तु तव क्षेमाय कल्याणाय च तव पुरतः आगतवान् आसम्। अधुना पूर्णमनसा सन्नद्धोऽस्ति मत्कथाः प्रवचनानि च श्रावयितुम्? ममाभ्यर्चना तु न विधास्यते त्वया?

ब्राह्मणः—नहि भ्रातः! नहि, साम्प्रतं त्वहं मनसा वाचा कर्मणा च तव शरणागतोऽस्मि, यथा त्वमाज्ञा तथा परिपालयिष्ये।

ब्राह्मणदेवम् असति कलियुगमार्ग आगच्छन्तं दृष्ट्वा नितरां प्रसन्नमनाः सः प्रोवाच—अस्तु, अहं त्वामवश्यं रक्षिष्यामि। त्वमत्रैव तिष्ठ, अहं राज्ञा सह सम्मिल्य तव राज्ये प्रत्यागमनाय प्रयतिष्ये।

कलिरेकस्य परिव्राजकस्य रूपं धृत्वा राजसभां सम्प्राप्तः। राज्ञाऽपि तं सन्तं मत्वा सम्यक् सत्कृत्य तस्य तत्रागमनस्य हेतुः पृष्टः। तदा कलिरुवाच—महाराज! भवान् महदनर्थं कृतन्त्वया। तदेव ज्ञात्वा भवन्तं सावधानं कर्तुम् इहागतोऽस्मि। भवतः राज्यस्य प्राचीनं ब्राह्मणदेवम् भवान् स्वराज्याद् बहिश्चकार। तादृशो विद्वान् सदाचारी धर्मनिष्ठः सन्तुष्टश्च ब्राह्मणः भवद्-राज्यस्य भूषणमासीत्। न सुष्ठु साधितन्त्वया तं राज्यात् निस्कास्य। अहो! महदपराधो विहितः। अवश्यम्भोक्तव्यम्भविष्यत्यस्यानिष्टं फलन्त्वया।

त्वयेत्थं निन्दितोऽपि सः त्वयि दुर्भावम् नाभिधत्ते। मार्गे मिलितो मया सः राष्ट्रस्य सीमानमतिक्रम्य बहिर्गच्छन्। भवते सन्देशश्चैकः प्रेषितस्तेन यद् यस्मिन् प्रासादे त्वं निवसस्यधुना, अद्य रात्रौ स्वयमेव स आपतिष्यति, अद्य तस्मिन् प्रासादे मा स्वपितु। वार्ताञ्चेयमत्रैव वक्तुमिष्यते स्म तेन परं भवता तस्मै किमपि कथनाय अवसरो न प्रदत्तः। अतः सः मया सह मिलित्वा भवतः सुरक्षायायमुं सन्देशं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रेषितवान्। तच्च मयोक्तम्भवते, अधुना त्वं स्वयं विचारय किं कर्तव्यमकर्तव्यञ्च त्वया।

सन्तवेषाधारिणः कलेः प्रस्थानानन्तरं सन्दिग्धः सन्नपि स्वमृत्यु-भयात् परिव्राजकस्य वाचि विश्वसन् राजा तं प्रासादं तत्याज। रात्रौ किञ्चन कारणवशात् भूकम्पनम् अभूत तेन तद् भवनम् पूर्णम् अधः आपतितम्। प्रातरुत्थाय प्रासादं पतितं, ब्राह्मणवाणी सत्या जातेति मत्वा पश्चात्तापमकरोत्। विचारतिन्तेन यद् एतादृशः दण्डो मया ब्राह्मणाय प्रदत्तस्तथापि सः मम कल्याणमेव वाञ्छति। दुराचारी भवितुं न शक्नोत्ययम्। अहं जनैः पथभ्रष्टीकृतोऽस्मि। तेषां दुष्टानां वाचि विश्वस्य मया महानपराधो विहितः।

तदैव राज्ञा ब्राह्मणदेवमन्वेष्टुं राजदूताः सैनिकाश्च प्रेषिताः। ते च ब्राह्मणदेवं ससम्मानम् आनीतवन्तः।

राजा क्षमायाचनां कुर्वन् प्रोवाच—ब्राह्मणदेव! क्षम्यताम्, क्षम्यताम्, महान् अपराधः कृतो मया। परमितः प्रभृति भवान् कुत्राऽपि न गमिष्यति, पूर्ववत् अत्रैव कथाः श्रावयिष्यति।

ब्राह्मणोऽवचत्—महाराज! नह्येषा भवतां मम वा त्रुटिः। वयं सर्वे कलियुगस्य निग्रहे वर्तमानाः स्मः। सोऽस्मान् यथा यथा अकारयत् तथैव तथैव वयम् आचरितवन्तः।

अग्रे प्राब्रवीद् ब्राह्मणः—महाराज! भवतु, इतः परम् अहम् पूर्ववत् सात्त्विककथाः न श्रावयिष्यामि अपितु कलिपुरुषस्य कथाः श्रावयिष्यामि। अन्यथा अद्य इव पुनरपि भवतां मति भ्रान्ता भविष्यति एवञ्च मादृशाः सदाचारिणो जनाः देशात् निष्कास्यन्ते।

१७४, रामानुजमार्गः, इब्राहिमपुरम्,
देहली-११००३६

—:: ०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# "भाग्य-विडम्बना"

—डॉ० नारायण शास्त्री काङ्करः

रात्रौ जल-पानार्थम् उत्थितः श्यामः दृष्टवान् यत् तस्य पत्नी राधा पर्यङ्के उन्निद्रिता इव पार्श्वं परिवर्त्तयति स्म। सः ताम् अपृच्छत्—"अयि! किं निद्रा न आयाति? किं चिन्तयसि? इयत्यां रात्रौ व्यतीतायाम् अपि किं न स्वपिषि? किं पुत्रं प्रणवं स्मरसि?"

राधा उपविश्य उदतरत्—"आम्, अहं प्रणवम् एव स्मरामि। यः स्वल्पसमयाय अपि मम सान्निध्यं न त्यजति स्म, क्षणिकः अपि मदीयः वियोगः यस्मै सुदुःसहः सञ्जायते स्म, हन्त! अद्य पारे समुद्रम् अमेरिकां गतः सः मम तु का कथा? आर्यपुत्रं भवन्तम् अपि न स्मरति! पूर्वं यदा कदा पत्रं ददाति स्म, दूरभाषेण अपि अस्मत्-कुशल-क्षेमौ पृच्छति स्म। परन्तु पश्यामि, अष्ट-नव-मासतः मौनम् एव धारितवान्, मन्ये यथा आवां तस्य कृते कौचित् स्वः एव न। चिन्तयामि, तस्य स्वास्थ्यं कीदृशं भवेत्? परदेशे गृहे इव कः आत्मीयः तस्मै उपचारकः मिलेत्? इयम् एव चिन्तापिशाचिका मम सुख-निद्राम् अपहृतवती। आर्यपुत्र! भवान् किं विचारयति स्व-सुत-विषये?"

श्यामः कथितवान्—"प्रिये! त्वं मम हृदयम् एव अद्य उद्घाटित-वती। यद् अहं प्रतिक्षणं चिन्तयामि, तद् एव त्वं स्वमुखेन वर्णितवती। अन्ततः असि अपि तु मम पूर्णा अर्धाङ्गिनी एव। पतिव्रता त्वं मम हृद्-गतं सर्वं जानासि। यम् आवां वृद्धावस्थायाः यष्टिं सहायकं मत्वा आत्मीयाः सर्वाः सुख-सुविधाः परित्यज्य अपि एकचित्तौ परिपाल्य संवर्धितवन्तौ, हन्त! महान् खेदः अस्ति यत् सः तथा एव विस्मृतवान् यथा एकः पशुः पक्षी वयस्कः भूत्वा स्वजन्म-दातारौ माता-पितरौ विस्मरति।"

राधा श्याम-कथनं समर्थितवती—"आम्। सत्यं कथयति आर्यपुत्रः। किन्तु इदानीं किं चिन्तया सिध्येत्? अहं पूर्वम् एव कथयामि



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्म यत् इमं देववाणीं संस्कृतं पाठयतु। संस्कृतस्य अध्येता सदैव मातापित्रोः आज्ञाकारी गुरुसेवकः सदाचारी च भवति। संस्कृत-सम्बन्धो मां मम माता-पितरौ कथयतः स्म यत्—

संस्कृतस्य पवित्रस्य, स्वाध्यायः क्रियतां सदा।
मनःशुद्धिः कर्म-शुद्धिर्, यत एतेन जायते॥
संस्कृतज्ञो न सामान्यः, शिष्टो भवति सोऽन्यतः।
विद्या-विनय-सम्पन्नः, सदाचारी सदा हि सः॥
संस्कृतं कामधुग्भाषा, तत्सेवी नावसीदति।
नाऽनिष्टं कुरुतेऽन्यस्य, सदा सन्मार्गमाश्रितः॥
संस्कृतं किं न शिक्ष्येत, यत्साहित्यमनुत्तमम्।
देवा अप्याशु तुष्यन्ति, संस्कृत-स्तोत्र-गायके॥
संस्कृतं मधुरा भाषा, सदाचारनिरूपिणी।
एतां त्यक्त्वाऽन्य-सेवीयो, मन्दभाग्यः स मूढधीः॥
संस्कृतं येनं नाधीतं, पूर्वे वयसि सद्गुरोः।
पश्चात् तपति प्राज्यं स, परे वयसि संस्थितः॥
संस्कृतं योऽनधीत्यैव, सदाचारी बुभूषति।
मूलाधारं विना नाऽसौ, प्रासादं निर्मिमासति॥
संस्कृतं कल्प-वल्लीव, सर्व-सन्ताप-नाशकम्।
यथेष्ट-साधकं सद्यो, लोकद्वय-सुधारकम्॥

किन्तु भवान् आर्यपुत्रः मम कथनम् उपेक्षितवान्। अद्य तस्य एव दुष्फलम् उपभुज्यते। आत्मजः भूत्वा अपि प्रणवः आवां जननी-जनकौ इत्थम् अवहेलयति! अस्तु, यद् भवितव्यम् आसीत्, तद् भूतम्। यद् आशङ्कितम् अवर्त्तत, तद् एव अघटत। किम् इदम् अलं न यद् आवाभ्याम् एकस्य सन्तानस्य उज्ज्वल-भविष्यं निर्मातुं यद् आवश्यकं, तत् सर्वम् एव शुचितया अनुष्ठितम्। इदानीं सः स्व-माता-पितरौ प्रति आत्म-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कर्त्तव्यं निर्वहति न वा इति तद्-अधीनम्। परमेश्वरः तस्मै सन्मतिं ददातु।''

प्रिय पाठकवृन्द! श्रोतृवृन्द! निर्णायकवृन्द! श्यामेन राधया च सह घटिता घटना प्रत्येक-मातापित्रोः अस्ति। तौ स्व-सुविधानां बलिं दत्त्वा सन्तानं किञ्चित्-करण-योग्यं निर्मातः। परन्तु सन्तानः ताभ्यां सह कथं व्यवहरति वर्त्तयति वा? इह दृष्टान्तः प्रणवः एव पर्याप्तः।

प्रणवः व्यवसायार्थम् अमेरिकां गतः आसीत्, तत्र एव एकस्याः उर्वश्याः प्रेम-पाशे पतितः लुब्धक-जाले पतितः मृगः इव ततः निःसर्त्तुं नैव अशकत्। तत्रत्यः एव अमेरिकायाः नागरिकः भूत्वा तया एव सह नित्यम् अरमत। माता-पितरौ अपि तस्य किञ्चित् कर्त्तव्यम् अवशिष्यते इति तु सः विस्मृतवान् एव। संस्कृतशिक्षा तस्मै बाल्यावस्थायां या न दत्ता, सा एव प्रणवस्य इमां स्थितिं कृतवती। अस्तु।

सेवानिवृत्तः श्यामः, तस्याः पतिव्रता पत्नी राधा, एतौ द्वौ एव प्राणिनौ सुख-दुःखयोः परस्परं सहभागिनौ यथाकथञ्चित् समयं यापतयतः स्म। श्यामः आधुनिक-युगम् अनुसर्त्तुं यत्र प्रबलः पक्षपाती आसीत्, तत्र राधा प्राचीन-भारतीय-संस्कृत्यनुरागिणी अवर्त्तत। तस्याः जन्म अपि संस्कृतज्ञ-पण्डितस्य गृहे समजायत। संस्कृतज्ञे स्वसंस्कृतौ निष्ठा, तदनुसृतौ प्रवृत्तिः च स्वाभाविकी एव। इमे एव संस्काराः राधायाम् अवर्त्तन्त। सा स्वपुत्रं प्रणवं संस्कृतज्ञं पण्डितं निर्मातुम् इच्छति स्म। परन्तु पत्युः कामनायाः अग्रे सा विफला अजायत। संस्कृत-संस्काराः प्रणवाय नैव मिलिताः। पित्रा प्रेरितः सः आधुनिक-शिक्षाम् अलभत। अस्यां शिक्षायां स्वार्थ-साधन-दृष्टितः अतिरिक्ता परार्थ-साधन-प्रवृत्तिः भवति एव न। इदं को न जानाति?

लोक-लज्जया प्रेरितः इव सः पूर्वं तु कांश्चन मासान् यावत् उपार्जित-वित्ततः कञ्चन राशिं पितृभ्यां प्रेषयति स्म। अनेन यत्र तस्य माता-पितरौ सन्तुष्यतः स्म, तत्र तस्य सम्बन्धिनः च अपि सुयोग्य-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पुत्र–प्रणव–लाभेन श्यामस्य राधायाः च सौभाग्यं प्रशंसतः स्म। तेषु च केचन प्रणयेन सह स्व–पुत्र्याः विवाहं कर्त्तुं प्रस्तावम् अपि आदाय राधायाः श्यामस्य च समीपे उपस्थिताः अभूवन्। तेभ्यः श्यामस्य उत्तरम् आसीत् यत् विवाहसम्बन्धे प्रणवस्य अपि स्वीकृतिः आवश्यकतां भजते। सत्यं तु इदम् अस्ति यत् प्रणवः अमेरिकां गत्वा तत्रत्यां स्वकार्यालये कार्यं कुर्वतीम् एकां सुन्दरीं युवतिं परिणीतवान् आसीत्। अस्य ज्ञानं राधा–श्यामयोः तदा एव अजायत, यदा प्रणवेन स्वपुत्रस्य प्रथम–जन्मदिन–गोष्ठयां सम्मेलितुं तौ अमेरिकायाम् आहूतौ। आत्मीयाम् अनुमतिं विना विवाह–करणात् खिन्नौ राधा–श्यामौ गोष्ठयां नैव सम्मिलितौ। तेन रुष्टः प्रणवः अपि अग्रेताभ्यां पत्र–प्रेषणं दूर–सम्भाषणं राशि–प्रेषणं च सर्वम् एव रुद्धवान् आसीत्।

अनेन राधा–श्यामयोः उद्विग्नता स्वाभाविकी एव आसीत्। अन्ततः तौ आस्तां प्रणवाय जन्मदातारौ। किन्तु चिन्तया उद्विग्नतया वा किं कस्यचन कदापि स्वाभीष्टं सिद्धम्? सिध्यति? सेत्स्यति वा? चिन्ता तु चितायाः अपि अधिका शोषणकरी भवति नु? शनैः शनैः समय–गत्या सह द्वौ अपि दम्पती राजयक्ष्मणा महारोगेण आक्रान्तौ। चिकित्सायां सञ्चिता सर्वा अपि सम्पत्तिः समाप्ता अजायत। केवलं सेवानिवृत्तौ प्राप्तेन मासिकराशिना किं सिध्यति? तदुपरि सुरसा–मुखम् इव विवर्धमाना महार्घता तु तयोः पृष्ठम् एव त्रोटितवती आसीत्। आर्थिक–दुर्बलतया अपेक्षित–चिकित्सा नैव मिलिता। एकस्यां रात्रौ उच्चैः कासः श्यामम् अत्यन्तम् अपीडयत्। कासेन सह सरुधिरः कफः यः निःसृतः, तेन तु श्यामस्य प्राणपक्षिणः एव उड्डीनाः। अस्यां विषमपरिस्थितौ विधवायाः राधायाः दशा सर्वथा शोचनीया दयनीया च एव अजायत। तस्याः करुण–क्रन्दनम् आकर्ण्य: प्रतिवेशिनः तद्गृहे समवेताः अभूवन्। महिलाः तां सानचयितुं प्रावर्त्तन्त। प्रतिवेशिनः एव सम्मिल्य श्यामस्य अन्त्यकर्मोपयोगि–प्रबन्धं कृतवन्तः। भाग्यस्य विडम्बनां पश्यन्तु, आत्मजे सति अपि श्यामाय पुत्र–प्रणवस्य स्कन्धौ नैव मिलितौ,



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कपालक्रिया अपि तदीया तस्य पुत्रस्य हस्तेन न अभवत्।

श्यामस्य एकेन मित्रेण राधातः निवास–सङ्केतं लब्ध्वा अमेरिका–स्थितः प्रणवः तदीय–पितुः श्यामस्य स्वर्ग–प्रस्थानेन सूचितः। किन्तु ततः मात्रे राधायै यत् पत्रं मिलितं, तत् तस्याः शोक–वर्धकम् एव अभवत्। प्रणवेन लिखितम् आसीत्—

"पूज्य–मातः! वन्दे। अधुना पश्चात्तापेन किम्? यः उत्पद्यते, सः म्रियते एव। न संसारे कश्चित् अपि अजरः अमरः च भवति। अधुना स्वात्मा सम्भालनीयः। सम्प्रति विविध–कार्येषु व्यस्तत्वात् आगन्तुं न शक्नोमि। शीघ्रम् एव प्राप्तावकाशः उपस्थातुं यतिष्ये।"

राधायाः शोकोद्वेगः अवर्धत। किम् इदम् एव दुर्दिनं द्रष्टुं प्रणवं सा प्रसूतवती? अमेरिकां गतः सः ईदृशः निष्ठुरः नास्तिकः निर्ममः च अजायत यत् तस्य पितृ–शोकः स्वल्पः अपि न अस्ति। संस्कृत–ज्ञान–शून्यः सः गीतां न जानाति, परन्तु एवं स्व–वाग्–वैभवेन तु महामहतः दार्शनिकान् प्रपि अतिशेते! अस्तु, यत् स्व–वशेन, तत्कृते किं वृथा शोचनीयम्? यद् भावि, तद् एव भविता। एवम् एकाकिनी उच्चावचं विचारयन्ती दिवङ्गतं पतिं श्यामं मेलितुकामा राधा स्वायुषः शेष–दिनाति गणयितुं प्रावर्त्तत।

एकं दिनं तद् अपि आयातं, यदा दिवं गमनात् पूर्वं राधा स्वात्मजं श्रोतुम् अवसरं लब्धवती। नेत्र–ज्योतिषः दुर्बलत्वात् राधा प्रणवं तस्य सम्बोधनेन एव परिचितवती। तस्य मस्तकं प्रेम्णा आघ्राय साश्रुनयना सा प्रकम्पमानेन हस्तेन तदीयं पृष्ठं स्फालयन्ती तम् इदम् एव कथयितुं परितवती—"पुत्र! बहु विलम्बः कृतः। त्वां द्रष्टुं स्वायुषः अन्तिमेक्षणे अपि धृत–लालसः एव तव पिता दिवङ्गतः अभूत्। अहम् अपि तं द्रुततरम् एव द्रक्ष्यामि। त्वं चिरं जीव, नीरोगः समृद्धिमान् ससुखं तिष्ठ। अहं परमात्मानम् इदम् एव याचे प्रार्थये च पुनः पुनः अन्तरात्मना।

अन्ते प्रणवः स्वागमनस्य प्रयोजनं प्रकटम् अकरोत्—"मातः! त्वदाशीः निष्फला न भविता। साम्प्रतम् अपि अहम् अमेरिकायां



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वव्यवसाये शीर्षस्थः नागरिकः अस्मि। न कश्चित् सुख–सौविध्ययोः अभावः अनुभूयते। यदि न्यूनता अस्ति तर्हि तव सान्निध्यस्य एव। मातः! अहं त्वाम् अमेरिकाम् एव नेतुम् आयातः अस्मि। अत्र एकाकिनी तिष्ठन्ती त्वम् अपि कदापि सुखं न प्राप्स्यसि। तत्र अमेरिकायां पुत्रेण, पौत्रेष पुत्रवधूभ्यां च सह विद्यमाना शेष–जीवनं सानन्दं यापयिष्यसि। यदि तत्र मनः न रमेत, तर्हि पार्श्वस्थे एकस्मिम् विधवाश्रमे निवासयिष्यामि त्वाम्। तत्र त्वादृश्यः अनेकाः वृद्धाः विधवाः निवसन्ति। समवयस्काभिः ताभिः त्वम् अवश्यं स्वं मनोविनोदयन्ती रंस्यसे। तम् आश्रमम् अमेरिका–वासिनः अमेरिका–वासिनः भारतीयाः एव सञ्चाल–यन्ति। अहं सर्वम् आश्रम–शुल्कं दास्यामि। त्वं मया सह चलितुं स्वात्मानं सज्जीकुरु। तत्र तव सपौत्रा पुत्रवधूः त्वां प्रतीक्षते। अत्र एकाकिनी स्थित्वा अधिकं न जीविष्यसि। श्वः एव प्रातः इतः प्रस्थातव्यम् अस्ति। यदि कश्चित् क्रेता मिलति तर्हि गृहम् इदं विक्रेतुं प्रयत्नं करोमि।''

पुत्र–प्रणवस्य इमम् अनाशङ्कितं प्रस्तावं श्रुत्वा स्तब्धा सती प्रस्तावं निराकुर्वती राधा सकष्टम् एतावद् एव स्खलद्–वाचा अवदत्—

''पुत्र! यत्र जन्म गृहीतं, तत्र एव मरणम् अपि उचितम्। तव पिता अत्र एव पञ्चसु तत्त्वेषु विलीनः। अहम् अपि आजीवनं तदनुगामिनी अत्र एव विलीना भविष्यामि। 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'।''

एवं सावेशं कथयन्त्याः तस्याः एका उच्च–हिक्का आयाता, तया एव सह सा निष्प्राणा सती छिन्न–मूला लता इव भूमौ निपतिता इति।

—विद्या–वैभव–भवनम्,
सुमेरुकर्णमार्गः, रामगञ्जम्,
धान्यमण्डी, जयपुरम् (राजस्थानम्)

—:: ०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# गर्वहरणम्!

—गीताञ्जली ताठे

रामनाथोपाध्यायः जनार्दनस्वामिनः अर्चकः। सः प्रतिदिनं विष्णु-प्रशस्तिमन्त्रान् पठति स्म। भगवतः नैवेद्यार्थं पाकम् अपि सः स्वयम् एव सज्जीकरोति स्म। पाकार्थम् अग्निः आवश्यकः खलु? तदर्थं सः शमीवृक्षखण्डेन निर्मितस्य अरणेः साहाय्येन प्रतिदिनं नूतनतया एव अग्निम् उत्पादयति स्म।

द्वादशवर्षीयः कश्चन अनाथबालकः तेन सह वसति स्म। सर्वेषु कार्येषु उपाध्यायस्य साहाय्यं कुर्वन् सः, अवकाशः यदा प्राप्यते तदा वेदं पठति स्म उपाध्यायात्।

एकदा उपाध्यायः ज्वरग्रस्तः जातः। तस्य चिकित्सार्थं वैद्यः आनयितः। वैद्यः आगत्य उपाध्यायं परीक्ष्य—"विशेषचिन्ता काऽपि करणीया नास्ति। मया औषधं दीयते। दिनद्वयं श्रमः न करणीयः। शीतलं जलं न पातव्यं च" इति उक्त्वा औषधं दत्वा—"पुनः आगच्छामि" इति उक्त्वा गन्तुम् उद्युक्तः।

तदा उपाध्यायः हसन्—"वैद्यः ऋणदाता च प्रस्थानसमये 'पुनः आगच्छामि' इति न वदेत्, प्रत्युत 'गच्छामि' इति वदेत्" इति अवदत्।

उपाध्यायस्य एतत् वचनम् अपमाननाय अमन्यत वैद्यः। अतः सः उपहासमिश्रितेन स्वरेण अवदत्—"ग्रहणां गतिं वदन् ज्योतिषिकः स्वगतिं ज्ञातम् अशक्नुवन् गर्ते पतति इति श्रूयते। सर्वरक्षकस्य भगवतः जनार्दनस्य एव पूजकः भवान्। एवं स्थिते सः एव मन्दिरात् किमर्थं न आनयितः चिकित्सार्थम्? यदि सः आनयितः स्यात् तर्हि तन्मुखात्—'पुनः आगच्छामि' इति वचनं श्रोतव्यं न अभविष्यत्" इति।

एतत् श्रुत्वा उपाध्यायः खेदेन उक्तवान्—"भगवान् सर्वरक्षकः सर्वव्यापी च। सः मन्दिरमात्रे निवसति इति चिन्तनम् अयुक्तम्। सर्वत्र निवसति सः। तथापि पापदुःखादिनिवेदनार्थम् अनुग्रहप्रार्थनार्थं च वयं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तं मन्दिरे प्रतिष्ठापयामः। यः तस्मिन् सुदृढं विश्वसिति तं सः निश्चयेन रक्षिष्यति एव'' इति।

"कथनम् अन्यत्। व्यवहारः अन्यः। सः एव रक्षिष्यति इति उच्यते। किन्तु रोगात् रक्षणार्थं वैद्यः आनय्यते। अतः वेदान्त-विचारः श्रवणमात्ररमणीयः, न तु अनुसरणयोग्यः। वेदान्तश्रवणात् न भवता भोजनं प्राप्यते, न वा मया। आस्तां तावत्। एषोऽहम् आगच्छामि न। न गच्छामि'' इति उक्त्वा वेगेन परिवृत्य प्रस्थितवान् वैद्यः। परिवर्तनसमये प्रमादवशात् सः स्तम्भेन घट्टितः अभवत्। ततः पतितः सः विसंज्ञः जातः। तदा उपाध्यायः एव बालकस्य साहाय्येन वैद्यस्य प्रथमोपचारं कृतवान्। अल्पे एव काले वैद्यः सचेतनः जातः।

मन्दम् उत्थाय उपविष्टः वैद्यः—"मान्यवर। सर्वस्यापि कार्यस्य किमपि कारणं भवति इति श्रूयते। मया भवतः उपहासः कृतः। तस्य परिणामतः वैद्येन सता मया एव भवतः सहाय्यं प्राप्तव्यम् अभवत्। क्षन्तव्यः अहम्'' इति उपाध्यायम् उक्त्वा ततः निर्गतवान्।

एतदन्तरम् उपाध्यायस्य कीर्तिः प्रवृद्धा। जनाः तद्विषये परस्परं वदन्ति स्म "उपाध्यायः महामहिमवान्। अरणितः अग्निम् उत्पादयितुम् सः एकः एव समर्थः। यः तं निन्दति, यश्च तस्य अहितम् उपेक्षां वा करोति तं जनार्दनस्वामी दण्डयति एव। वैद्यस्य घटना एव अत्र निदर्शनम्'' इति।

एतत् सर्वम् उपाध्यायः अपि श्रुतवान्। 'अहं वस्तुतः महामहिमवान् अस्मि एव' इति चिन्तयन् सः महान्तं गर्वं प्राप्तवान्।

अत्रान्तरे कदाचित् झंझावातकारणतः मन्दिरस्य ध्वजस्तम्भः पतितः। ग्रामीणाः प्रतिगृहं गत्वा धनं सङ्गृह्य नूतनस्य ध्वजस्तम्भस्य निर्माणं कारयित्वा। तस्य प्रतिष्ठापनार्थं योग्यं मुहूर्तं निश्चितवन्तः। मुहूर्तदिनस्य दशभ्यः दिनेभ्यः पूर्वम् उपाध्यायेन वार्ता प्राप्ता यत् दूरग्रामवासी कश्चन बन्धुः दिवं गतः इति। मृतस्य बन्धोः अन्तिम



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


संस्कार कर्तुम् अर्हः दायादः कोऽपि न आसीत्। अतः स च भारः उपाध्यायेन एव वोढव्यः आसीत्। यस्मिन् दिने ध्वजस्तम्भस्य प्रतिष्ठापनं करणीयं तस्मिन् एव दिने मृतस्य बन्धोः और्ध्वदैहिकसंस्काराः अपि करणीयाः आसन्।

उपाध्यायः मरणदिने गत्वा बन्धोः दहनसंस्कारादिकं निर्वर्तितवान्। ततः 'दशमादिषु दिनेषु' किं किं करणीयम्' इति शिष्यं निर्दिश्य त्वरया प्रत्यागतवान् सः।

बालकः उपाध्यायम् उक्तवान् आसीत् यत् सर्वाः क्रिया विधिवत् मया करिष्यन्ते एव इति। तदनुगुणम् एव आचारितं तेन। और्ध्वदैहिक-कर्माणि सर्वाणि समाप्य दशमे दिने सः उपाध्यायसमीपम् आगतवान्।

ध्वजस्तम्भप्रतिष्ठापनमुहूर्तः आसीत् मध्यरात्रे। समग्रे ग्रामे उत्साह-पूर्णं वातावरणं दृश्यते स्म। ऋत्विग्भिः यज्ञकुण्डं निर्माय सर्वा सामग्री सज्जीकृताः। अरणितः अग्निम् उत्पाद्य यज्ञक्रिया अनुष्ठातव्या आसीत्।

उपाध्याय गर्वेण हस्तेन अरणिं गृहीत्वा जनान् उद्दिश्य—''त्रेतायुगे महर्षिः नारदः एतं देवालयं प्रतिष्ठापितवान् इति श्रूयते। अतः एव वीणापाणिः नारदस्य सान्निध्यम् अद्यापि अत्र अस्ति इति जनाः विश्वसन्ति। अहम् अग्निदेवमावाहयामि। ऋत्विजः मन्त्रोच्चारणं कुर्वन्तः देवताभ्यः हविः अर्पयन्ति। ततः वयं सर्वे देवानाम् अनुग्रहपात्राणि भविष्यामः'' इति उक्तवान्।

अन्येषु दिनेषु अल्पेन एव प्रयासेन अरणितः अग्निः उत्पन्नः भवति स्म। किन्तु तस्मिन् दिने उपाध्यायेन बहुविधाः प्रयत्नाः बहुधा कृताः चेदपि अग्निः तु न उत्पन्नः। उपाध्यायः श्रान्तः, खिन्नः, लज्जितश्च सन् मौनेन् कोणे उपविष्टवान्।

एतदनन्तरं तत्र उपस्थिताः वेदविद्वांसः प्रयत्नं कृतवन्तः। तै अपि साफल्यं न प्राप्तम्। ग्रामे पुण्यात्मत्वेन ख्यातानां द्वारा अपि एतत् कार्यं कारितम्। सोऽपि प्रयत्नः व्यर्थः एव।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उपाध्यायस्य नेत्राभ्याम् अश्रूणि निर्गतानि। तस्य हृदयं व्यथापूर्णं जातम्। सर्वेषां प्रयत्नाः यदा विफलाः तदा उपाध्यायस्य शिष्यः बालकः अग्रे आगत्य अपृच्छत्—'गुरुवर्य! किम् अहम् अपि सकृत् प्रयत्नं करवाणि?' इति। "भवता मम मृतबन्धोः और्ध्वदैहिककार्याणि कृतानि। अतः वर्षं यावत् भवता यज्ञकर्माणिभागः न वोढव्यः" इति असन्तोषन अवदत् उपाध्यायः। तत् श्रुत्वा कश्चन वेदपण्डितः अवदत्—"मृतस्य संस्कारः यज्ञतुल्यः। तादृशे भागं गृहीतवान् एषः विशेषपुण्यं सम्पादित-वान् अस्ति। अतः एषः अग्नि—उत्पादनार्थं प्रयत्नं यदि करोति तर्हि न कोऽपि दोषः" इति।

तदा उपाध्यायः—"युक्तम् उक्तं भवता। मानवसेवा एव माधवपूजा इत्येतत् विस्मृतम् आसीत् मया। प्रेतसंस्कारकर्म कोटियज्ञतः अपि श्रेष्ठम्। अतः अयं बालकः धन्यः। अरणितः अग्नेः उत्पादनं मया एकेन एव कर्तुं शक्यते इति मम महान् गर्वः आसीत्। स च इदानीं भग्नः। भगवान् बालकद्वारा एव अग्निम् उत्पादयितुम् इच्छेत् अपि। भगवतः संकल्पं को वा जानाति?" इति उक्त्वा बालकस्य प्रयत्नाय अनुज्ञां दत्तवान्।

बालकः आदौ गुरुम् उपाध्यायं नमस्कृतवान्। अनन्तरम् अग्निदेवम् आवाह्य—"यदि अहं गुरोः आज्ञापालकः स्यां, यदि च गुरौ भगवति च भक्तिः मम स्यात् तर्हि अग्निः उत्पन्नः भवतु" इति उक्त्वा अरणि मथनं कृतवान्। तत्समनन्तरम् एव ततः अग्निः उत्पन्नः। उपस्थिताः सर्वे जनाः वेदपण्डिताश्च बालकस्य प्रशंसां कृतवन्तः।

यज्ञसमाप्तेः अनन्तरं वेदमन्त्रपुरस्सरं ध्वजस्तम्भस्य प्रतिष्ठापनं सम्पन्नम्।

अनन्तरदिने जनार्दनस्वामिनः नैवेद्य सज्जीकरणकालः यदा आगतः तदा उपाध्यायः शिष्यम् आहूय—"भवान् एव अरणिमथनं कृत्वा अग्निम् उत्पादयतु" इति आदिशत्। "अहं गुरोः स्थाने स्थातुं न अर्हामि।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रेतसंस्कारात् कोटियज्ञफलं प्राप्यते इत्येतत् निरूपयितम् एव भगवान् मह्यम् अग्रे: उत्पादनस्य अवकाशं दत्तवान् स्यात्'' इति उक्त्वा बालकः अग्न्युत्पादनकार्यं विनयेन निराकृतवान्।

तदा उपाध्यायः मनसा भगवन्तं स्मरन् अग्न्युद्दीपनार्थं प्रयत्नं कृतवान्। आश्चर्यं नाम क्लेशं विनैव अग्निः उत्पन्नः एतदवसरे। सर्वथा गर्वभावरहितः उपाध्यायः जनार्दनस्वामिनं विनयेन नमस्कृतवान्।

ततः केषांश्चित् वर्षाणाम् अनन्तरं सः एव बालकः उपाध्यायस्य स्थाने तिष्ठन् स्वकर्तव्यनिर्वहणेन सुविख्यातः अभवत्।

—ताराकांत ६६,
अध्यापक वसाहत,
सहकारनगरम्-१,
पूणे-४११००९, महाराष्ट्रम्

—:: ० ::—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# हरफूलजाटः ( जुलान्याः )

—डॉ० रामेश्वरदत्तशर्मा

चकास्ति चेदं लोहारु उपमण्डलं भिवानीमण्डलस्य पश्चिम-दक्षिणकोणे हरियाणाप्रदेशे। यत्र उच्चैः स्वर्णमयी सिकता स्थल्यः सुमेरु शिखरैः सह सुतरां स्पर्धमाना दरीदृश्यन्ते। वस्तुत एतासु सिकतास्वेव मृगतृष्णा तरुणायते। अत्र समुत्पन्ना शमीवृक्षमाला ग्रीष्मर्तौ प्रचण्डतापेन तप्तान् कृषकजनान् नितरां शमयति। अत्रत्या जना धनधान्येन सम्पन्ना हृष्टाः पुष्टा हास्यरसालापैरनेककथाकथनैः स्वजीवनं सुखेन नयन्ति! यत्र तत्र सर्वत्र कुल्या वहन्ति। मार्गेषु विविधानि वाहनानि धावन्ति। स्थाने-स्थाने विद्यालयाः, चिकित्सालया, औद्यौगिक-प्रशिक्षणालयाः सुशोभन्ते। उन्नतवक्षःस्थलाः पथिकानां चित्तचौरा वामाङ्गना विलसन्ति। किं बहुना उपमण्डलं चैतत् स्वर्गलोकम-प्युपहसति।

परं पुरात्र एतादृशं वातावरणं पर्यावरणञ्च नासीत्। सप्ततिवर्षेभ्यः पूर्वमत्र नद्य नासन्, कूपा अपि अल्पा एवासन्, नान्याश्च विविधाः सुविधा आसन्। तदा चात्र भृशं दरिद्रता चासीत्। लोकानां समीपे न वस्त्राणां, गमनागमनयोः अथवान्यस्य हर्षोल्लासस्य अशनपानयोः कापि सुविधा वासीत्। यदा कदा वृष्टिरजायत, तदा कृषका वज्रान्नं वपन्ति स्म। भवनानां छदिभ्य आपतितं वर्षाजलं गृहस्य प्राङ्गणे निर्मितेषु कुण्डेषु सञ्चिन्वन्ति स्म। आवर्षं च तज्जलं पिबन्ति स्म। तस्मान्नाहरवानामक एको रोगोऽपि लोकानां प्रायः संभवति स्म। बहवोऽकालमृत्युमुखे प्रयान्ति स्म। तस्मादेवैतत् स्थानम् मरुस्थलं समुच्यते स्म। जलं बिना म्रियन्ते यत्र तत्स्थलं मरुस्थलम् उच्यते। यातायातस्य साधनम् उष्ट्रा भवन्ति स्म। एतादृशो महाकष्टबहुलश्च प्रदेशोऽयमासीत्। अस्य उपमण्डलस्य बिसलवासग्रामे रतनानामधेयो जनोऽजायत। स जात्या जाटः, परं व्यवसायेन स सीवनकर्मपरायण आसीत्। स लोकानां वस्त्राणि असीव्यत्। परन्तु लोकाः तस्मै पारिश्रमिकं सद्य एव न ददति स्म,



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अपितु प्रतिदेयं (उधार) कृत्वा कर्पटानां सीवनम् अकारयन्। रतना एतेन व्यवहारेण भृशं दुःखी चासीत्।

स बहुधा चिन्तनपर आसीत्। किमर्थं दरिद्रतया भृशं पीडितोऽत्र वसामि। तथाचोक्तं **दारिद्र्यदोषो गुणराशिनाशी।** यदि अहं कस्मिंश्चिद् नगरे गच्छामि तदा मम जीवनं सुष्ठुतरं भविष्यति। श्रूयते नगरेषु सभ्याः शिक्षिताः सम्पन्नाः श्रेष्ठा लोका भवन्ति। ते सीवनकर्मणः प्रतिदेयं न कुर्वन्ति। एवं विचार्य सपरिवारं जीन्दनगरं ययौ। जीन्दनगरस्य रेल्वे मुख्यसंस्थानमाश्रित्य स्वकार्यमारब्धवान्। उक्तञ्च—

**देशान् उत्सृज्य गच्छन्ति सिंहाः सत्पुरुषाः गजाः।**

जीन्द नगरेऽन्येऽपि बहवः सूचीकर्मविदो जनाः स्वीयसीवन-कर्मकुशला आसन्। प्रायो ग्राहकाः स्वपरिचितिनामेव सीवनाय वस्त्राणि ददति स्म। अयं ग्रामीणोऽशिक्षितोऽकुशलः सूचीकर्मविदस्ति, अतो न कोऽपि तस्मै वस्त्रं ददाति स्म। सौभाग्येन केचन जुलानीग्रामवास्तव्याः कृषकाः तेन कानिचिद् वस्त्राणि असीवयन्। रतना स्वभाग्यं दूषयन्नाह— **आकाशात् पतितोऽहं खर्जूरे च प्रलम्बितः।** ग्रामे तु बहूनि वस्तूनि प्रतिदेयेनापि मिलन्ति स्म। ग्रामीणाः विपत्तावभावे च सहायका भवन्ति। एते नागरिका समवेदनाशून्याः सन्ति। एते सुतरां स्वार्थपरायणाः सन्ति। अत्र तु मम वर्तमानमेव न सुरक्षितं भविष्यस्य कथैव का? अन्येद्युः जुलानीग्रामवासिनो जना यदा आगताः तदा स तान् कथयामास "भ्रातरः" अत्र मम जीविका न चलति, यदि युष्माकं ग्रामे मदर्थं कापि व्यवस्था भवितुं शक्नोति, अहं ग्रामं गन्तुमभिलाषामि। कृषका प्रत्युत्तरेऽवोचन् एतत्तु सुवर्णे सुगन्धो भविष्यति। अस्माभिरपि यातायाते महद्दुःखं प्राप्यते। ते तं सपरिवारं जुलानीग्रामेऽवासयन्। ग्रामे तस्य कार्यं सुष्ठुतरं चलितुं स्मारब्धम्।

मनुष्यः स्वपरिस्थितिवशानुसारं चिन्तयति। स्वानुकूलं चाचरति। परन्तु तस्य दैवं तत्कृतकर्मानुसारं चालयति। कालः क्रूरः कस्मैचिदपि



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न दयते। कालो न वयः समीक्षते, न तस्य परिस्थितीर्गणयति, न च भविष्यं चिन्तयति। एवमेव समभूत् रतनासार्धम्। स सहसा स्वर्गं प्रायात्।

तस्य जमना नाम जायासीत्। सा ग्रामीणा, अशिक्षिता केवलं गृहकर्मपरायणा महिलासीत्। तस्मिन् समये तस्याः समीपे द्वे सुते, एकश्च पुत्रो हरफूलो नाम आसन्। गृहे किमपि खाद्य पेयवास साधनं नासीत्। सामान्यजनैः विधवा नाम श्रुतं, परं वैधव्यं कियद् दुःखकरं भवति, एतत्ते न जानन्ति तथा चोक्तं "**वैधव्यं तद् भवति भवने जीवितं चैव मृत्युः**" समाजे ये सभ्याः सज्जनाः साधवः प्रतीयन्ते, ते सर्वे कामुकतया विधवां पश्यन्ति। केवलं वासनापूर्त्यर्थम्। सम्प्रति जमना किं कुर्यात् यदि सा म्रियते, तदा तस्या वत्सानां पालन–पोषणं को विधास्यति। तस्यै तु कोऽपि प्रतिदेयमपि दातुं नोद्यतो भवेत्। अहर्निशं प्रतिक्षणं वत्सास्तां कातरदृष्ट्या पश्यन्ति स्म। ते बुभुक्षिता नग्ना इतस्ततो वीथीषु भ्राम्यन्ति, परं तेषां न कोऽपि सहायक आसीत्। विवशीभूय ग्रामप्रधानस्य शेरसिंहस्य समीपे सा गतवती। हस्तौ सम्पुटीकृत्य चैवं सा प्रार्थितवती—

चौधरीसाभ ! अहं दूरदेशीयास्मि। मे वत्सा क्षुत्तृड्भ्यां व्याकुलीभूय मरणासन्नाः सन्ति। अहं तव दासीभूय प्रत्येकं कर्म करिष्यामि। दयस्व, कृपां कुरु, किञ्चिद् देहि, नो चेद् मम वत्सा शीघ्रमेव कथावशेषा भविष्यन्ति।

आखेटार्थम् आखेटका वनाद् वनमटन्ति। शेरसिंहस्य चैनद् अहो भाग्यं, यद् आखेटः स्वयमेव तस्य क्रोडे समागतः। स बभाण जमने ! मा चिन्तां कुरु। अहं त्वां भरिष्ये। यद्यपि शेरसिंह आयुषा प्रौढ आसीत्। सपत्नीकश्चाप्यासीत्। परं पुरुषस्य कामवासना कदा सन्तुष्टिं याति। संसारे वस्तुद्वयं निन्दितं भवति "**पुरुषस्य कामवासना नार्याश्च नग्नता।**" शेरसिंहस्तया सह उन्मुक्तं स्वच्छदं विहरति स्म। सापि किं कुर्यात्। विवशता बुभुक्षा च वज्रहृदयं नमयति।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हरफूल आसीत् तदा अष्टदशवर्षीयो बालकः। स शेरसिंहस्य अनैतिकम् अनुचितं गर्हितमाचरणं सततं पश्यति स्म परं स किमपि कर्तुं कथयितुं वा न समुत्सहते स्म। तेन चिन्तितं मम माता विवशा असहाया वर्तते। एतस्मादेवैषा शेरसिंहस्य शोषणं सहते, का गतिः? अस्मात् कुकृत्यात् कथं रक्षणं भवेत्। तेन बहुशश्चिन्तितं परं न कोऽप्युपायो हस्तगतोऽभूत्। अन्ततः स तस्मात् स्थानात् अन्यत्र गमनमेव वरमिति निश्चित्य रात्रावेव बहिर्निर्गतः। स कुत्र गतः? तत्र गत्वा तेन किं कृतम्? एतत् सर्वमज्ञातमासीत्। तस्य अन्वेषणाय को गच्छेत्। शेरसिंहस्तु परम प्रसन्नोऽभवत्। यदेका बाधा तस्य स्वतन्त्रविहरणे आसीत्। सा प्रभोः कृपया स्वयमेव साधिताभवत्। परन्तु जमनायाः हृदयं सहसाऽस्फुटत्। सा प्रत्यहं प्रतिक्षणं रोदिति स्म। कस्याग्रे कथयेत्, सा सर्वशून्या चासीत्। सा सर्वदा चैवमेव कथयतिधरणिमातः! त्वं स्फुट, देहि च मे विवरं, येन तस्मिन् अहं समाविशेयम्। परं याचनेन किं क्वापि सिद्धिर्भवति।

हरफूलस्य एका भगिनी भानी नामासीत्। तस्य विवाहो ढाबी ग्रामवासिनो मनफूलसिंहस्य राकेशनामकेन पुत्रेण सह एतेन पणबन्धेन अभूत् यत् मनफूलसिंहः स्वपुत्र्याः विवाहं हरफूलेन सह करिष्यति।

किञ्चित् कालान्तरं हरफूलो यदा युवा सञ्जातः तदा स स्वभगिन्यः भान्या गृहमागतः भानी स्वभ्रातरं हरफूलं सर्वं प्राबोधयत् यदेषा भूरी नाम्नी मम ननान्दा पणबन्धा तव भाविनीभार्या वर्तते। भूरी चापि प्रबोधिता। एवं तयोर्द्वयोः परस्परं मिलनं सम्भाषणं प्रारब्धम्। तथाहि **व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः**। हरफूलस्याग्रे महती समस्या चेयमासीत् यदहं विवाहानन्तरं भूरीं कुत्र नेष्यामि। मम गृहं नास्ति। स विचारयामास जुलानीग्रामे यातव्यम्। तदानीं तस्य मातापि मृतासीत्। स जुलानीं गतवान्। शेरसिंहस्य सम्मुखे समुपस्थाय एवं जगाद–चौधरीसाभ! मदीयं गृहं सम्प्रति मह्यं देहि, यतोऽहमत्र वस्तुमिच्छामि। शेरसिंह उवाच! कोऽसि त्वं, गृहं किं तव पित्रा निर्मितम्! मया तु



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


दयावशात् तव मातुः तव भगिन्योर्भरण–पोषणं कृतं, तयोर्विवाहादिकं कृतम्। अत्र तव कृते किमपि नास्ति। यत आगतोऽसि तत्रैव गच्छ, अत्यन्तानुनयेन विनयेनापि यदा शेरसिंहो गृहं दातुं सहमतो नाभूत्। तदा हरफूलः क्रोधाविष्टोऽभूत् तथा च किञ्चिदनर्गलमपि बभाषे। तदा शेरसिंहेन तत्पुरुषैश्च हरफूलोऽर्धचन्द्रिकां दत्त्वा गृहान्निःसारितः। हरफूलोऽन्यत्तु किमपि कर्त्तुं नाशक्नोत्। शेरसिंहस्यैका घोटिका तस्य क्षेत्रे चरन्त्यासीत्। तां निगृह्य, आरुह्य च स धावितवान्।

शेरसिंहो ग्रामस्य प्रधान आसीत्। तस्य बहवो जनाः कर्मकरा भृत्या आसन्। तस्मिन् काले ब्रिटिशानां साम्राज्यम् आसीत्। तत् साम्राज्यं च शेरसिंह प्रभृतीनां योगदानेन चलति स्म। अतः सर्वकारस्य पुरुषा प्रधानस्य प्रत्येक कथनं उचितमनुचितं कीदृशमपि भवेत् ते कुर्वन्ति स्म।

हरफूलो निगृहीतः। जीन्दथानाध्यक्षेण पं० दयाकृष्णेन स एवं पशुमारं ताडितो यथा स मूर्च्छां प्राप्नोत्। यदा तस्य मूर्च्छा व्यपगता, तदा स परमात्मनां प्रार्थयमानोऽवादीत्—हे परमात्मन्! त्वं सर्वज्ञोऽसि। मया किमपराद्धम्। तस्य नराधमस्यापि कुकृत्यानि पश्य। प्रथमं मम मातुः शोषणं कृतम्। मम गृहं स्वायतीकृतम् गृहस्य सर्वा सामग्री चापहृता। तस्य न त्वया न सर्वकारेण, न च समाजस्य ठेकेदारैः किमपि कृतम्। अहम् निर्बलोऽस्मि, अनाथोऽस्मि असहायोऽस्मि। एतेन प्रतीयते यत् त्वं वस्तुतो दीनेभ्योऽनाथोऽसि। अस्तु अहं स्वयमेव प्रतिशोधं करिष्ये। एवं निश्चित्य स सैनिकस्य वेशभूषां परिधाय जीन्दे थानाध्यक्षस्य गृहं गतवान्, थानाध्यक्षं चाहूतवान्। तस्मिन् आगते सति झटिति तं गोलिकया हतवान्। तदनन्तरं जुलानी ग्रामे शेरसिंहं तस्य क्षेत्रे शयानमहन्।

तेन पुनश्चिन्तितम् अहो! विधातस्तव महिमा अपरम्पारो वर्तते। किं प्रयोजनमाश्रित्याहमत्र समागतः किञ्च तज्जातम्। सम्प्रति भूर्याः किं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भविष्यति? यदा जुलानीं प्रति आगन्तुमुद्यतोऽहमभवम्, तदा तया कथितं—**चेतो हरं ( हरफूलं ) कामयते मदीयम्।** अतस्ताञ्चावश्यमहं परिणेष्यामि। संकल्प्य स पुनः ढाबीं प्राप्तः स स्वसुः श्वशुरम् उवाच मांसाभ! भूर्या विवाहो मया सह त्वरया करणीयः। समयस्य अभावो वर्तते। अहं संकटापन्नोऽस्मि। मनफूलसिंहोऽवदत्। एतदिदानीं कथमपि भवितुं न शक्नोति। त्वया वधद्वयं विधत्तम्। त्वत् कृते मृत्युदण्डो निश्चितो विद्यते। एतदेव वरं वर्तते, यन्मम गृहात् तत्क्षणमेवान्यत्र गच्छ, अन्यथा आरक्षीपुरुषान् आह्वयामि। हरफूलेनानुभूतं यदयं वृद्धो मम भूर्याश्च सम्बन्धे महती बाधा भविष्यति। अतो विवशीभूय तेन स वृद्धोऽपि हतः! All Things are right in Love and war अर्थात् प्रेम प्रसंगे सर्वं समुचितं भवति।

हरफूलो दिवसे यत्र कुत्रापि गच्छति स्म, रात्रौ च गेहमायाति स्म। केनापि गुप्तचरेण नरवानाथानाध्यक्षः सूचितो यद् हरफूलः प्रत्यहं स्वभगिनीगृहे रात्रौ गुप्तरूपेण आयाति। थानाध्यक्षो ढाबीमागत्य, हरफूलस्य भगिनीं तर्जयामास, त्वं स्वभ्रातरं थानाधिकारिणे समर्पय अन्यथा त्वां सर्वेषां समक्षं नग्नां विधास्ये। भानी रात्रौ स्वभ्रातरं सर्वं न्यवेदयत्। हरफूलः प्रातः काले समुत्थाय नरवाना थानाध्यक्षस्य सम्मुखे घोषितापराधिनां पंक्तौ मिलित्वाऽगच्छत्। उपस्थितिरनन्तरम् अवशिष्टं जनं दृष्ट्वा थानेदारोऽपृच्छत् त्वं कोऽसि? स प्राह अहं हरफूलोऽस्मि यस्यकृते त्वया कथितं यत् मम भगिनीं नग्नां विधास्यति एवमुक्त्वा झटिति गोलिकया तं स यमलोकं प्रापितवान्।

टोहाना नगरे गोवधशाला चलति स्म। हरफूल एकस्मिन् दिने तां प्रविश्य, सर्वान् वधिकान् हत्वा सर्वा गाः मोचितवान्। एतेन सर्वकारो भृशं चुकोप। तस्य निग्रहणाय विशेषबलानि यत्र तत्र नियुक्तानि। तदा हरफूलस्य केचन सखायस्तं नीत्वा घड़वालीवासिनं रामस्वरूपममिलन्। तैः स प्रार्थितः चौधरीसाभ! त्वं शक्तिशाली असि। तव गृहाभ्यन्तरे



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


समागन्तुं न कोऽपि समुत्सहते। अत एनं गुप्तरूपेण रक्ष। रामस्वरूपः प्रत्यवदत् अहम् एनं रक्षिष्यामि, परमेकः पणबन्धोऽस्ति। यदयमग्रे अन्यदनिष्टं न किमपि करिष्यति। हरफूलस्तथा स्वीकृतवान्।

स्वाणाग्रामे कांसूरांघड़ो महाबली जात्या यवनश्चैक आसीत्। तेनैको वृषभो (सांडः) हतः। समीपस्थ गंगाणा ग्रामवासिनो हिन्दवस्तम् उपालब्धुं तत्र गताः। कांसूरांघड़ो गर्वेणोक्तवान् चौधरीसाभाः! यूयं हिन्दवः स्थ, त्रयोदशे दिवसे दीयमानं भोजनं कृत्वा गच्छेत। एतच्छ्रुत्वा ते भृशं विषण्णवदना बभूवुः। ते हरफूलस्य सविधे गत्वोचुः भ्रातः! अस्माकं जीवनं मरणादपि अवरं जातम्। स कांसूरांघडः सद्य एव हन्तव्योऽथवा वयं मरिष्यामः। हरफूल उक्तवान् चौधरीसाभाद् अनुमतिर्ग्राह्या। चौधरी साभेन तेषां प्रस्तावो नानुमतः। हरफूलस्तदपि तैः सह चलितः। तेनाग्रिम एव दिवसे कांसूराघड़स्तस्य भ्राता च यमलोकं गमितौ। ततस्तैः सखिभिः स प्रबोधितो यदधुना त्वं राजस्थाने डूंगरपुरे वसन्तं मीणाभंवरसिंहं शरणं ब्रज। प्रस्थानात् पूर्वं स गंगाणाग्रामे नन्दरामस्यगृहे स्थितां भूरीममिलत्। तयोर्द्वयः प्रेमालाप इत्थमभूत–हरफूलसिंहः प्रिये! श्वो मया राजस्थानं गन्तव्यं वर्तते। न जाने, किञ्चित् कालानन्तरं अस्माकं पुनः सौभाग्यसूर्योदयो भवेद् न वा। सुखं दुःखं, संयोगो–वियोगो सदा परिवर्तेते। अतस्त्वं नेत्रे निमील्य शेषं समयं गमय। पश्चादावां विरहगुणितान् तान् तान् अभिलाषान् परिणत–शरच्चन्द्रिकासु क्षपासु निर्वेक्ष्यावः। एवं प्रेमालापैस्तौ विनिद्रं व्यतिया–म्बभूवतुः। परं हा हन्त हन्त नलिनीं गज उज्जहार।

हरफूलो राजस्थानं गतवान्। न जाने मीणाहतकस्य विश्वासघातेन अथवा कस्यापि गुप्तचरस्य सूचनया हरफूलो राजस्थानारक्षिकैर्निगृहीतः। फिरोजपुरकारावासे च पातितः। प्रदर्शनमात्राय अभियोगश्चालितः। न्यायाधीशेन मृत्युदण्डेन दण्डितः। तदा स हरफूल एकस्यां काल–कोष्ठिकायां तथा निपातितो यथा नागराजस्तृणपेटिकायां, तथा वनराजः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



केसरी पञ्जरे निगृह्यते।

तदैव हिसारमण्डलस्य केचन स्वतन्त्रतान्दोलनकारिणोऽपि तं कारावासं गताः। ते हरफूलममिलन्। हरफूलस्तान् पप्रच्छ—यूयं कथमत्र आगताः? तेष्वन्यतमः पं० चिरंजीलालो मित्ताथलवासी उवाच–अस्माकं देशो आंग्लैरधीकृतो वर्तते। तेऽस्मान् लुंठन्ति। देशस्य दुर्भगा दशा तैः कृता वर्तते। अस्मान् कुक्कुरा इत्थं संबोधयन्ति। अतो वयं देशं स्वाधीनं कर्तुम् आन्दोलनं कुर्मः। एतच्छ्रुत्वा हरफूल उच्चैः स्वसित्वा उवाच—अहो! महदत्याहितम्! कश्चिच्चेदिदं वृत्तान्तं मां प्रागकथयिष्यत्–तदाहं न जाने आंग्लानां कियदनिष्टं अकरिष्यम्। इत्युक्त्वा स हरियाणासिंहो व्य....रं....सी....त्।

—पूर्वनिदेशकः,<br>
हरियाणा संस्कृत अकादमी,<br>
पंचकुला, चण्डीगढम्

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# लोकेशस्य संघर्षः

—डॉ० उर्वी

कमला एकस्मिन् ग्रामे स्वपत्या सह वसति स्म। तस्याः द्वे सन्तती आस्ताम्। एकस्तु त्रयोदशवर्षीयः पुत्रः लोकेशः, द्वितीया च पञ्चवर्षीया पुत्री कला। द्वावेव विद्यालये अपठताम्। कमलायाः पतिः चन्दनदासः कस्यचित् व्यापारिगृहे सेवक आसीत्। कमलाऽपि ग्रामेऽन्येषां जनानां कार्यं कृत्वा स्वल्पां वृत्तिं प्राप्नोति स्म। तेषां गृहस्थितिः अतीव सन्तोष-जनका आसीत्।

एकस्मिन् दिवसे यदा चन्दनदासः व्यापारिणो गृहात् कार्यं समाप्य स्वगृहं प्रति आगच्छति स्म तदा सायंकाले षड्वादनवेला आसीत्। व्यापारिणः केचन अतिथय आगता आसन्, अतः ते व्यापारिणः चन्दनदासं रात्रिदशवादनपर्यन्तं निरुद्धवान्। सर्वेऽतिथयः मदिरापानं मादकद्रव्याञ्श्च सेवन्ते स्म। साहुकारः चन्दनदासमपि तत्सेवनार्थं ददाति, प्रथमं तु चन्दनदासः न गृह्णाति परमनन्तरं स स्वीकरोति। स व्यापारिणो गृहे एव सर्वमसेवत। सेवनादनन्तरं स बहुस्वादं विचित्राञ्च चित्तवृत्तिमनुभवति। एवं दशवादनवेला सञ्जाता चन्दनदासः स्वगृहं प्रति चलितुमारब्धः। मार्गे स मादकद्रव्याणां विषये चिन्तयन्नेव गृहं प्राप्तवान्। स तूष्णीकः गृहं प्रविश्य भोजनञ्च कृत्वा अशेत। कमला किञ्चिद् संभ्राता जाता, मनसि च विचारितवती 'अद्य किं संजातं स्वामिनः तु कामपि वार्तां न कृतम्? तर्कयामि बहुपरिश्रान्ताः सन्ति इति। अनेनैव कारणेन... ।' प्रातःकाले उत्थाय चन्दनदासः स्नानादिकं भोजनञ्च कृत्वां व्यापारिणो गृहं प्रत्यगच्छत्। सर्वं दिवसं स मदिरामादक-द्रव्यविषये अचिन्तयत्। अवसरं प्राप्य स व्यापारिणं मदिरामादक-द्रव्यविषये पृच्छति। तदा व्यापारी कथयति "आवां मिलित्वा प्रतिदिन-म्मद्यसेवनङ्करिष्यावः।" एवं द्वावेव सायंकाले मिलित्वा मदिरापानं मादकद्रव्यांश्च भुक्तवन्तौ। एकमासानन्तरं यावत् चन्दनदासोऽर्द्धं वेतन-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मानयति तदा कमला स्तब्धा संजाता, अचिन्तयच्च "किं सञ्जातं स्वामिनम् अस्य व्यवहारोऽपि परिवर्तितः वेतनञ्चार्द्धं सञ्जातम्।" अन्यस्मिन् दिवसे सा स्वयमेव व्यापारिणो गृहं गच्छति तत्र सा बोधितवती यत् चन्दनदासः व्यापारिणा सह मिलित्वा किं किं करोति। शनैः शनैः चन्दनदासेन सम्पूर्णं वेतनं मादकद्रव्याणां कृते भस्मीकृतमिव। अधुना तेन गृहस्य वस्तूनां विक्रयः प्रारब्धः। कमला तु इतस्ततः भ्रमतिं स्म कदाचिद्धनोपार्जनाय कदाचिच्च चन्दनदासस्य मादकद्रव्याणां लाभाय। सा यत्किंचिदपि गृहे आनयति चन्दनदासः सर्वमचोरयत्। अधुना चन्दनदासो व्यापारिणो गृहे कार्यार्थं न गच्छति स्म गृहे स्थित्वा एव कमलां ताडयति स्म। तस्याः धनञ्च बलात् गृह्णाति स्म। लोकेशोऽपि सर्वं दृष्ट्वा अतीव चिन्तितोऽभवत्। विद्यालयस्य शुल्कं दातुमसमर्था कमला बालान् विद्यालयाद् निष्कासयति। लोकेशः सर्वां स्थितिं विचार्य कार्यार्थे मात्रा सह अगच्छत्। मार्गे ग्रामात् किञ्चिद्दूरे एकं कार्यालयमपश्यत् यत्र लिखितमासीत्, "नशा–मुक्ति संगठन"। स कार्यालस्यान्तः प्राविशत् तत्र अधिकारिभ्यः स्वपितृविषये सर्वा वार्ता कृत्वा मातरमवर्णयत्, स एतदपि अवर्णयत् यत् श्वः एतेऽधिकारिणोऽस्माकं गृहम् आगमिष्यन्ति पितरञ्च चिकित्सितुमत्रानेष्यन्ति। तौ तूष्णीकौ गृहमागच्छताम्। द्वितीये दिवसे नशामुक्तिसंगठनस्य अधिकारिणः तेषां गृहे आगच्छन्। चन्दनदासः कमलामपृच्छत् किमेतत्? एते जनाः किमर्थमागताः? तदा लोकेशोऽवदत् यत् "एते जना क्रमशः परीक्षणं करिष्यन्त्यस्माकं यतो हि भवान् वरिष्ठः, अतः सर्वप्रथमं भवतः परीक्षणं भविष्यति तदनन्तरमस्माकम्।" परं चन्दनदासोऽवदत् "अहं जानामि युवामन्यकारणेन मां तत्र प्रेषयथः द्रक्ष्याम्यहं युवाम्" एवं चन्दनदासः नशामुक्तिकार्यालये लोकेशविधिना प्रापितः। एतदनन्तरं लोकेशः मातरम् अवदत्, "हे मातः! त्वया काऽपि चिन्ता न करणीया, अहं त्वया सह कार्यं करिष्यामि गृहं च प्रागिव सुव्यवस्थितङ्करिष्यामि। भगिनी कलाऽपि पुनः विद्यालये पठिष्यति", एवं तौ कार्यार्थे बहु भ्रमितवन्तौ, परं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वमसिद्धं सञ्जातम्। अधुना कमलालोकेशाभ्यां मिलित्वा ग्रामे एव ग्रामीणबैंकस्य समीपे एकस्मिन् चायापणे चायविक्रयः प्रारब्धः। कमला तु चायनिर्माणं करोति स्म लोकेशश्च यत्र तत्र विक्रीणाति स्म। कतिचिद् दिवसानन्तरं स पितरमपि पश्यति स्म, द्वौ मासौ व्यतीतौ अधुना चन्दनदासस्य स्थितौ शनैश्शनैः परिवर्तनं भवति स्म।

एकस्मिन् दिवसे ग्रामीणबैंकस्य अधिकारिणः किञ्चित्विश्रामं कर्तुमिच्छन्ति स्म भोजनस्य साकं चायपानं करिष्यामः इति ते विचारितवन्तः अतस्ते लोकेशं चायस्य आदेशं दत्वा किञ्चित् शिथिलाः सञ्जाताः। अकस्मात् अस्त्र–शस्त्र सहिताः केचन् चौराः बैंके प्रविष्टाः, तैः बैंकस्य सुरक्षासैनिकेषु (सुरक्षागार्ड) आक्रमणं कृतं, तेषामस्त्रशस्त्राणि बलात् अपहृतानि तैः बैंकस्य कर्मचारिणः ग्राहकाश्च निगृहीताः।

तदा एव लोकेशः चायं गृहीत्वा बैंकम् अगच्छत् अन्तः दृश्यं दृष्ट्वा स बोधितवान् यदन्तः काचिद् गभीरा स्थितिर्वर्तते। तेन चायस्य भाण्डं (केतली) तत्रैव क्षिप्त्वा कपाटस्य निकषा एव चौरेषु इष्टकाभिः प्रहाराः कृताः। येन चौराः इतस्ततः विच्छिन्ना अभवन्। अवसरं प्राप्य बैंकस्य प्रबन्धकेन सावधानार्थं घंटिकावादनं कृतम्। चौराः गोलिकाप्रहारान् कुर्वन्ति स्म। तैः लोकेशेऽपि गोलिका प्रहाराः कृताः परन्तु लोकेशस्तु सुरक्षित आसीत् बारं बारं च इष्टकाप्रहारान् करोति स्म। घंटिकावादनं श्रुत्वाऽनेके जनाः बैंकं प्रति धावितवन्तः। चौरा आत्मरक्षार्थं बैंकाद्बहिः निर्गताः परं मोटरसाइकिलानां कुंजिकाः न प्राप्तवन्तः। इदं दृष्ट्वा लोकेशः पुनरपि स्वप्राणानपि न चिन्तयित्वा चौराणामुपरि इष्टकाप्रहारं करोति स्म। लोकेशः तावत् पूर्णसाहसेन प्रहारान् करोति स्म यावज्जना आगत्य चौरान् न गृहीतवन्तः। किञ्चित्कालानन्तरमारक्षिदलमप्यागतम्। आरक्षिजनाः चौरान् गृहीतवन्तः। लोकेशस्य विवेकेन साहसेन च बैंके लुण्ठनं सेवितम्। लोकेशः मातरं प्रत्यगच्छत् माता तु पूर्वमेव लोकेशस्य साहसवार्ताम–



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्यजनेभ्योऽश्रृणोत् सा अतीव प्रसन्ना आसीत् वारं वारं च स्वपुत्रस्य मस्तकं चुम्बति स्म आलिङ्गनं च करोति स्म। तस्य साहसिकं कार्यं दृष्ट्वा गणतन्त्रदिवसस्योपलक्ष्ये राष्ट्रियवीरतापुरस्काराय लोकेशस्य नाम घोषितम्। अन्यस्मिन् दिवसे उभावेव चन्दनदासं प्रत्यगच्छताम् तत्रापि सर्वेऽधिकारिणः लोकेशं प्रशंसन्ति स्म कमलां च वर्धापयन्ति स्म। तेऽवदन् यत्, "अधुना चन्दनदासः पूर्णस्वस्थो जातः स्त। स गृहं गन्तुं शक्नोति। लोकेशस्य वीरतायाः सम्पूर्णः समाचारः चन्दनदासः जानाति स स्वपुत्रस्य पुरस्कारसमारोहेऽपि गन्तुमिच्छति"। तदैव चन्दनदास आगच्छति।

सोऽधोशिर एव तिष्ठति वदति च, "कमले क्षम्यतां माम्, बह्वनाचरितं मया। अद्य संकल्पितोऽहम् यत् मदिरापानं मादकद्रव्याणां च सेवनं कदापि न करिष्यामि"। अधिकारिणां बहुवारं धन्यवादं कृत्वा कमला लोकेशः तथा चन्दनदासेन सह स्वगृहे आगतवती। उत्तरेद्युः राष्ट्रपतिभवने लोकेशः पुरस्कारं प्राप्तवान्। तस्यपितरौ तं भृशमालिङ्गित-वन्तौ।

—सहायकाचार्या,
संस्कृतविभागे,
श्रीवेंकटेश्वरमहाविद्यालयः,
नवदिल्ली

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अन्तर्व्यथा

—पद्म शास्त्री

ग्रीष्मस्य प्रचण्डे चातपे राजमार्गनिर्माणार्थं प्रस्तराणि त्रोटयन्तीं स्वेदक्लिन्नामेकां षष्ठिवर्षात्मिकां चीत्कुर्वन्तीं महिलां विलोक्य चावतरिताहं स्कूटरयानात्। विश्वविद्यालयं गच्छन्त्यासं तदानीमहं, मया दृष्टं यत्तस्या वामचरणं प्रस्तराघातेन क्षतविक्षतमभूत्। मूर्छितेव सा रुदन्ती राजमार्गस्येके कोणे विलपन्ती मयावलोकिता। तत्पार्श्वमागत्य मया स्वझोलाज्जलकूपिकां निःसार्य तस्या ग्रीवायां जलं निपातितम्। दीर्घं निश्वसन्ती सा चक्षुषी विस्फार्य मां विलोकितवती। मया कथितम्-अम्ब! एतादृश्यामवस्थायामपि भवती कठिनकार्यमेतत्कथं कुरुते, किन्नास्ति तव कोऽपि पुत्रः पुत्री वा? अम्बशब्दश्रवणसमकालमेव सा दयार्द्रा मयि स्नेहप्लुता ब्रूते—

पुत्रि! आसीन्ममाप्येकः पुत्रः। यदा स समुत्पन्नस्तदैव तस्य पिता स्वर्गमगात्। मयेत्थमेव भृतिकार्यं कृत्वा काठिन्येन तस्य भरणं पोषणञ्च कृतम्। अहं तं पाठितवती, पाठनार्थं विद्यालयं महाविद्यालयञ्च प्रेषितवती। मदीया हार्दिकी समीहा चासीद्यदयञ्चोपजिलाधीशो भवतु। बी०ए० कक्षामुत्तीर्य सोऽप्येकदा मामवदन्मम भृती रेलविभागे सञ्जाता, भृत्यर्थमहं गच्छामि। तस्मादिनान्न स गृहं प्रतिनिवृत्तः।

जातदया सा मत्कर्तिते चरणे पट्टिकामबध्नात्स्नेहेन च मत्परिचर्यां कृतवती। तत्परिचर्ययाहं स्वस्थैवानुभूतवती। सा चाश्रूणि विमुञ्चन्ती ब्रूते-पुत्रि, पुत्रस्तु गृहन्न प्रतिनिवृत्तः किन्तु द्विवर्षपूर्वं तस्यैकं पत्रमागत-मासीदहं तत्पत्रस्य वाचनं कारितवती-तस्मिन्विलिखितमासीदम्ब!

तव शुभाशिषाहं स्वस्थोऽस्म्यत्र। गृहादागमनानन्तरमत्राहं, दुर्गा-मातुर्मन्दिरे पूजकोऽभवम्। कतिपयवर्षानन्तरं मुख्यपूजकस्तु मृतः। सम्प्रत्यहमेव मुख्यपूजकः सञ्जातः। जना मामत्र चतुर्वेदिनाम्नाव-गच्छन्ति। मन्दिरे प्रतिदिनं सहस्त्ररूप्यकाणामायो वर्तते। कोटिकोटि-रूप्यकाणां सम्पत्तिर्वर्तते मन्दिरे। अहं जातिं परिवर्त्य चतुर्वेदिनाम्ना निवसाम्यत्र मन्दिरे, रहस्येऽपावृते जना मां निष्कासयिष्यन्ते श्रद्धालवो भक्ताः प्रत्यहं मां परिचरन्ति। मम जीवने न किमपि नैयून्यं वर्तते।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पत्रेऽहं स्वपत्रसंकेतमपि न लिखामि, यतो हि संकेतं प्राप्य त्वमत्राग-मिष्यति। मत्सर्वस्यापि व्यापारस्य हानिर्भविष्यति-इत्युक्त्वा सा स्वजीर्णवस्त्रस्य स्पूतादेकं जीर्णशीर्णं पत्रं निष्कासितवती। पत्रेण सह तत्पुत्रस्यैकं चित्रमप्यासीत्। चित्रे पुत्रोऽयं चन्दनचर्चितभालो लम्बकेशः स्थूलवयुर्विलक्षितः।

गमनानन्तरं स गृहन्न प्रतिनिवृत्तः। तद्दिनादयमेव राजमार्गस्थ नियोजकः (ठेकेदार) मद्भरणपोषणं करोति। मत्कृते भोजन-वस्त्रादिकं यच्छति। अहमत्रैव भृतिं कृत्वा स्वावशिष्टं जीवनं क्षपयामि, पुत्रि, इत्युक्त्वा सा भृशं रुरोद। तद्दशां श्रुत्वा विलोक्य च ममाप्यश्रूणि समागतानि। सर्वं विस्मृत्याहं ताम्प्रत्यूचे-अम्ब, सर्वं विसृज्य चल मया सह मद्गृहं न तत्र तव कृते किमपि कार्यं वर्तते। सुसम्पन्नं वर्तते मद्गृहं, धनं, धान्यं, भृत्याः सर्वे तत्र वर्तन्ते। मदीयोऽपि पुत्रश्चैको वर्तते। भृत्यस्तं विद्यालयाद् वाहने समानयति। केवलं तं दुग्धं पाययतु, कदाचिल्लालयतु। नान्यत् तव कृते तत्र किमपि कार्यं वर्तते। चलतु तावन्मम गेहमम्ब!

वृद्धा प्रोवाच—नाहं त्वया सार्धं चलिष्यामि। राजमार्गस्य नियोज-केन सह जीवनं यापयिष्यामि। अनेन आपत्काले मम साहाय्यं विहितम्, नैनं त्यक्षामि, तव पुत्रस्य कृते मम शुभाशिषः सन्ति—

यत्स न कदापि स्वजातिं परिवर्त्य कृत्रिमं जीवनशैलीं यापयतु। शिक्षां प्राप्य स वस्तुतो मानवजातेः सेवां कुर्यादिति मे शुभाशीर्वादाः। अहं प्रत्यहं दुर्घनाग्रस्ता भवामि, पुत्रि! त्वं मां दृष्टवती, त्वया मत्परिचर्या कृता।

अहं भगवन्तं प्रार्थयामि पुनः पुनः यत्तव पुत्रो युवा भूत्वा जातिं विस्मृत्य त्वां कदापि न विस्मरेदिति निगद्य सा भृशं रुरोद। रुदन्तीं तां विलोक्याहमपि फूत्कर्तुं लग्ना। न जाने तत्पुत्रस्य कृते किम्वा मत्पुत्र-स्य कृते।

—१२८, मुक्तानन्दनगरम्,
गोपालपुरामार्गः, जयपुरम्-१८



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# "श्रम एव जयते"

—डॉ० क्षेमचन्द्रः

दौलतरामः शाहदरास्थ गंगाबिहारोपनगरे निवसति। स एक आपणिकोऽस्ति। भाटकस्य आपणे चायदध्नो विक्रयं करोति। तस्य द्वौ पुत्रौ स्तः। ज्येष्ठः पुत्रो विश्वम्भर एकस्यां विद्युत्परिषदि कार्यरतो वर्तते। तस्य मासिकं वेतनं त्रिसहस्त्र मुद्रात्मकमेव। द्वितीयः पुत्रो वेदप्रकाशः विद्यानुरागी अध्ययनशीलश्च। स अहर्निशं श्रमं कृत्वा शिक्षकस्यातिरिक्त साहाय्येन बिना वरिष्ठमाध्यमिक परीक्षां पञ्चसप्तति प्रतिशत अङ्कान् प्राप्य उत्तीर्णम् अकरोत्।

सः स्वपितरं न्यवेदयत् "पिता! मया वाणिज्यवर्गे वरिष्ठ-माध्यमिकपरीक्षा प्रथमश्रेण्यामुत्तीर्णा। अतएव अहं चारटर्ड गणकस्य 'चारटर्ड एकाउण्टेंट' परीक्षायां स्वकीय नामलिखनं वाञ्छामि। श्रुत्वा दौलतराम अकथयत् "किं त्वं भविष्यकालेऽपि अध्येतुं वाञ्छसि? एतत्तु जानास्येव यत्परिवारस्य भरणपोषणाय आपणात्पर्याप्त आयो न भवति। तस्माद् वयं उत्पन्नभोजिनः स्मः। तव ज्येष्ठभ्राता विश्वम्भरः परिवारपालने हस्तावलंबं ददात्येव। त्वमपि वैतनिकोभूत्वा सन्ततेः पालने मम साहाय्यं कुरु।

वेदप्रकाशः अवदत्"पितः! उत्तम सेवायाः कृते विशिष्ट-शिक्षाया अभ्यासोऽपि आवश्यको भवति। अतएव गणकस्य उत्तम सेवायै "चार्टर्ड एकाऊण्टेण्ट" शिक्षायाः शिक्षणमत्यावश्यकम्। अन्यथा अहमपि अल्पवेतनभोगी भूत्वैव कृच्छ्रेण जीवनं यापयिष्यामि।

आम्, कथनन्तु ते युक्तियुक्तमेव परमहमपि विवशोऽस्मि। किं करोमि? अपि त्वं न पश्यसि? आपणे सर्वकालं यावत् उपविशामि विक्रयं चापि परिश्रमेण करोमि तथापि परिवारस्य निर्वहणं सुष्ठु न जायते। पितुर्वचनं श्रुत्वा सविनयं वेदप्रकाश प्रत्युवाच "पितः! अहमस्यै परीक्षायै व्यक्तिगतरूपेण आवेदनं करिष्यामि। भवतो न ग्रहीष्यामि



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



किमपि शुल्कम्। केवलं पुस्तकानां कृते भवतो धनं ग्रहीष्यामि अत्र श्रमस्तु मम भविष्यति। दौलतरामः अवदत्—यद्येवं वर्तते तर्हि तदर्थम् आवेदनं कुरु। पितुः संमत्या प्रसन्नचित्तो वेदप्रकाशः प्रवेशं लब्ध्वा अध्येतुं प्रवृत्तोऽभवत्। वर्षं यावद् निराबाधः स अहर्निशं श्रमं कृत्वा प्राथमिकवर्गस्य परीक्षां सप्तति-प्रतिशत-अङ्कान् लब्ध्वा उत्तीर्णमकरोत्।

दौलतरामोऽपि पुत्रस्य सम्यक् साफल्यं ज्ञात्वा अतीवप्रसन्नोऽभवत्। इत्थं कतिपय मासान् यावत्कालस्तु गतोयथातथम्। परन्तु कालस्य गतिः कुटिला भवति। अतएव कालस्य कौटिल्येन दौलतरामो दुर्घटना ग्रस्तोऽभवत्। शल्यचिकित्सोपरान्तेऽपि सम्यक् रूपेण इतस्ततो भ्रमितुं योग्यो नासीत्। नासीच्च पूर्णकालं यावत् आपणे उपवेष्टुम्। तस्माल्लाभांश अल्पीयान् जातः।

पुत्र! वेदप्रकाश मम विश्रामस्य हेतोः त्वया आपणे विक्रयार्थ-मुपवेष्टव्य। अल्पकालिकविक्रयेण पर्याप्त आयो न भवति। अनेन धनाभावेन परिवारपालनं चापि तव शिक्षा-दीक्षा कथं भविष्यति? इत्युवाच दौलतरामः। पितुर्वचनं श्रुत्वा वेदप्रकाशः पितरं न्यवेदयत् "आम्, पितः किञ्चित् कालं यावत् अध्ययनं विहाय आपणे उपवेक्ष्यामि।

तदनन्तरं वेदप्रकाशः श्रमेण अध्यनं कृत्वा अपराह्ण चतुर्वादने आपणे उपविशति स्म। षट्वादनपर्यन्तं च चायदध्नो विक्रयं कृत्वा गृहं प्रत्यागत्य च पुनरध्ययनं करोति स्म। होराद्वयोरेव कालाभावात् तस्याध्ययनं विघ्नपूर्णमासीत्। सः चिन्तयति स्म यत् मम अध्ययने दुग्धे मक्षिकापात इव महान् प्रत्यूहो वर्तते। अनेन बाधितं भविष्यति मेऽङ्कानां श्रेष्ठप्रतिशतम्।

किञ्चित्कालानन्तरं दौलतरामः पुनः वेदप्रकाशम् अवदत्! पुत्रः न शक्योऽहं दशहोराकालं यावत् आपणे उपवेष्टुम्। चिरकालिकोपवेशनेन कटिभागे महती पीडा जायते। पितुर्वचः श्रुत्वा किञ्चित् विचिन्त्य अवदत्—पितः किं करोमि, समयाभावेन न शक्नोम्यहं सम्यग् रूपेण अध्येतुम्। तथापि भवतो विश्रामस्य हेतोः यतिष्येऽहम्। आम्, पुत्र! जानामि, त्वमपि न शक्नोषि आपणेऽधिकं समयं दातुम्। परमहमपि



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विवशोऽस्मि। कटिभागस्य पीडा असहनीया भवति।

आपणाद् गृहमागत्य वेदप्रकाशोऽचिन्तयत्। ननु पितुः पीडा मया निवारणीया। गच्छामि, भ्रात्रा विश्वम्भरेण सह वार्तां करोमि। स एव कार्यालयसेवायाः यत्किञ्चित् कालं रक्षित्वा कदाचिन्मे साहाय्यं कर्तुं शक्नोति। रात्रौ गृहागतं विश्वम्भरं पृच्छति—भ्रातः! किं त्वं येन केन प्रकारेण सेवायाः किञ्चित्कालं रक्षित्वा आपणे उपवेष्टुं शक्नोषि?

विश्वम्भरः श्रुत्वा प्रत्यवदत्—किमर्थमेतत्पृच्छसि। त्वं जानास्येव यत्कार्यालयात् पंचवादनात् पूर्वं गृहमागन्तुं न शक्नोमि। एतत्तु पूर्वत एव जानामि परन्तु मया विचारितमासीत् यत् सेवायाः कालपरिवर्तनं कृत्वा किञ्चित् कालं त्वया रक्षितव्य इत्युवाच वेदप्रकाशः। विश्वम्भरेण भणितं यत्त्वया सम्यगेव विचारितम् एतत्सम्भवितुमर्हति। अहं गृहस्थित एव आह्वानं श्रुत्वा विद्युत् समस्यानां निराकरणं कर्तुं शक्नोमि। प्रसन्नचित्तो वेदप्रकाशोऽवदत्—यद्येवं तर्हि शोभनमेव।

तद् दिनादारभ्य विश्वम्भर आपणे उपविशति स्म। आह्वानं श्रुत्वा विद्युत् समस्यानाम् आपणात् तत् तत् स्थानं गत्वा च निराकरणं करोति स्म। इत्थं वेदप्रकाशस्य अध्ययनस्य हेतो अधिकाधिक कालं रक्षति स्म। वेदप्रकाशस्य माता अपि यद् विश्वम्भरोविद्युत् समस्यां दूरीकरणाय आपणाद् गच्छति स्म तदा आपणे उपविश्य सहयोगो यच्छति स्म। यदा-कदा आपणस्य कालोऽपि वेदप्रकाशाय रक्षितो भवति स्म।

वेदप्रकाशोऽपि अचिन्तयत्—पिता, माता, भ्राता, चापि सर्वे मम अध्ययनार्थम् आपणे उपविश्य कालं रक्षन्ति। मया यथाशक्तिं यत्नेन पठितव्यः। इति विचिन्त्य सः पठनेऽनवरतोऽभ्यासमकरोत्। किं बहुना आपणे विक्रय कालेऽपि अध्ययनरतो भवति स्म। तत्फलतो मध्यवर्गस्य (intermediate group) परीक्षा तेन पञ्चसप्तति प्रतिशत अङ्कान् लब्ध्वोत्तीर्णा। मध्यवर्गस्य परीक्षाफलेन प्रसन्नो वेदप्रकाशः दृढ परिश्रमं कृत्वा अन्तिम वर्गस्य (C.A. Final Group) परीक्षायां प्रथम श्रेण्या-श्चापि अधिकान् अङ्कान् लब्धवान्।

दौलतरामः पुत्रवेदप्रकाशस्य साफल्यस्य प्रशंसां श्रुत्वा अति-प्रसन्नोऽभवत्। स वेदप्रकाशम् अकथ यत्—पुत्रः! तव श्रमफले



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गर्वितोऽहम्, त्वं कठोरपरिश्रमं कृत्वा प्राप्तवान् शोभनमेतत्साफल्यम्। अतएव तवोपरि पुत्राभिमानी जातोऽहम्। पितः! श्रमोऽपि गुरुजनानाम् आशीर्वचोभिः फलति। आशीर्वादेन प्राप्यते पुण्यलाभः इति पितरमवदत् वेदप्रकाशः। किञ्चिद्विचिन्त्यदौलतरामोऽवदत्—इदानीं सुशिक्षितस्त्वं जीविकापालनयोग्योऽसि। अतः काचिद् योग्यजीव्या त्वया अन्वेषणीया। आम्, पितः। परीक्षाफलात्पूर्वमेव मया सुप्रतिष्ठितरेमण्ड-वस्त्रसमित्यां सहायगणकस्य रिक्तपदाय आवेदितो वर्तते। श्वः तत्पदाय कन्नाटपैलेसस्थ प्रेक्षा स्थाने भविष्यति मम साक्षात्कारः। भद्रं कृतं पुत्रेण। तवैषा चातुरी प्रशंसनीया। ईशकृपया सफलो भवतु पुत्रस्यायं कामः इत्युवाच दौलतरामः।

अपरेद्युः वेदप्रकाशः साक्षात्काराय कन्नाटपैलेसस्थप्रेक्षास्थानम् अगच्छत्। तत्र समित्या निदेशको वेदप्रकाशेन दत्तैः प्रश्नानामुत्तरैः तुष्टो भूत्वा तमकथयत्—मयावृतोऽसि त्वम्। गृहाणैतत् स्वकीयं नियुक्ति पत्रम्। पत्रं गृहीत्वा मनसा च प्रभुं स्मरन् वेदप्रकाशो निदेशकं प्रत्यवदत्—श्रीमन् अनुग्रहीतोऽस्मि।

वेदप्रकाशः गृहं प्रत्यागत्य पितरं न्यवेदयत्—पितः समित्या निदेशकेन वृतोऽहं सहायगणकस्य पदाय।

श्रुत्वा दौलतरामोऽवदत्—सुकृतं पुत्र! ईश्वरेण श्रुता मम प्रार्थना। शोभनमेव जातम्, तव श्रमस्येदं फलम्।

सम्प्रति सुखसम्पन्नो दौलतरामस्य परिवारः। परिवारस्य जनानां कालः सुखशान्त्या गच्छति। नात्र काचित् समस्या धनाभावस्य नैव च जीविका पालनस्य।

सत्यमेव—

**मधुरं फलं कर्मण एव तस्य,**
**श्रमवती यस्य भवति च क्रिया।**
**अविगण्य बाधा यः करोति श्रमम्,**
**विजयते यतो जयते हि श्रमः॥**

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# कामदानवः

—'रसराजः' जयदेव जानी

सप्ताहं यावत् पूणेसमीपे पोलीसशालायाम् अपराधिजनेभ्यः अनपराधिनां विवेचनमिति विषये व्याख्यानानि दत्वा देवराजः पोलीस-कार्यालयं प्रविशति तत्र कश्चन कर्मकारिणाऽऽगत्य पानीयं प्रदत्तं कथितम् च अधिकारिमहोदय! समाजे अत्याचारस्य सीमा लोपिता जाता।

अधुना किं जातम्?।

अधिकारिमहोदय! धनिकानां, कीर्तिमतां, विशिष्टजनानां च शक्तिसामर्थ्यं मध्यमवर्गीयान् पीडयति।

किं वदसि?।

अधिकारिमहोदय! दिवसपूर्वं विश्वनाथोऽत्र पाशबद्धः समानीतः। तस्य कोऽपराधः?। स एकं कीर्तिमन्तं यवनगायकं ताडयितुं सज्जोऽभवत्। यद्यपि न स यवनो गायकस्ताडितः। देवराजोऽल्पकालीन-कारावासं दृष्टवान्। तत्र स विश्वनाथं पश्यति। मध्यमवर्गीयः प्रौढो नातिगौरो नातिकृष्णः। देवराजः पुनः पृच्छति।

विस्तरेण कथय।

स एव वक्ता। नाहं सकलं वृत्तान्तं जाने।

देवराजः कारावासाभ्यन्तरे गच्छति। कर्मचारी च आसन्दीमानयति स वदति।

अहं देवराजः। इदं स्थानं ममाऽधिकारे वर्तते।

जाने। किन्तु ममाऽपराधः कथं महान् मन्यते?।

'केन?।'

'सर्वैः।'

'न मया।'



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'सर्वे एवं कथयन्ति।'

'नाऽहम्।'

'यदि त्वं मम वृत्तान्तं ज्ञास्यसि तदा जानासि यन्मया किं कृतम्।'

'कथय।'

'अहं विश्वनाथः। मम पत्नी विशाला। आवयोरेका पुत्री वैभवी। सा बाल्यकालादेव गायने अनुरक्ता, यत् शास्त्रीयगीतानि चलचित्रगीतानि नाट्यगीतानि च गातुमारभत। अस्माकं परिसरे नगरे ज्ञातिसमाजे च तस्याः गीतवैशारद्यं काले काले स्पष्टो जातः। सर्वे जनाः 'वैभवीम्' अपरां काले कोकिलकण्ठीमिति कथयन्ति स्म।

......कथयन्ति स्म! कथं भूतकालः?।

भूतकालमेव मन्ये। तस्या अतिप्रशंसाम् आकर्ण्य मुम्बापुरीयेन यवनगायकेन साऽऽकारिता। वयं तत्र गताः। यवनो गायकस्तां दृष्ट्वाऽश्चर्य चकितो जातः। तेन सपदि जल्पितम्।

**शतपत्ररागोऽधरो नवनीतसमे च कोमलौ बाहू।**
**बालार्काभं वदनं कम्बुसमाना ग्रीवाऽस्या नु॥**

ततस्ततः। देवराजो वदति।

मया च मम पत्न्या विशालया च विचारितं यदस्य यवनस्य प्रशंसनप्रकारो विचित्रोऽसमीचीनश्च। तदा मया तस्य यवनस्य कामदानवो तस्य नयनयोर्न दृष्टः। तेन उक्तम्—महाशय! युवयोः पुत्री सङ्गीतविश्वेऽनुपमा सर्वाधिककीर्तिमती सर्वश्रेष्ठा च नचिरादेव भविता। इयं मम प्रतिज्ञा।

अद्भुतम्। मणिकारः खलु मणिपरीक्षां यथार्थमेव करोति। देवराजो वदति।

अधिकारिमहोदय! न स मणिकारोऽपि त्वनर्थकारी।

ततस्ततः।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आवां वैभवीं च यवनगायकस्य विशाले भवने न्यस्य गृहं प्रत्यागतवन्तौ। मासत्रयादूर्ध्वं भारतसर्वकारस्य राष्ट्रीयकार्यक्रमे वैभव्या राष्ट्रभक्तिपूर्णं गायनमेकं गीतम्। राष्ट्रपतिना चतुर्दशवर्षीयामस्मत्पुत्रीम् आश्लिष्य प्रशंसावाक्यानि गदितानि। श्रेष्ठबालगायिकाया उपाधिरपि वितरितः। आवाभ्यां दूरदर्शने सर्वं विलोकितम्।''

युवाभ्यां सम्मानमप्यनुभूतं भवेत्। देवराजो वदति।

आम्, आम्। प्रफुल्लितान्तःकरणेन प्रसन्नहृदयेन चाऽऽनन्दभरेण भावेन सपत्नीकोऽहं मुम्बापुरीं धावितः। यवनगायकस्य विशाले भवने विशाले च जनसंमर्दे देवाङ्गनाया बालिकेव बालहरिणीव मुग्धा वैभवी प्रशंसातिरेकात् किञ्चिदज्ञातेव मोहिता विलोकिता। अहं तां द्रष्टुमालिङ्गितुं प्रशंसितुं हर्षं च व्यक्तीकर्तुं प्रत्युपसृतः। विशालाऽपि मामन्वसरत्। किन्तु दुर्भाग्यवशात् वैभव्याः सामीप्यं न प्राप्तम्। यवनेनऽऽवां दृष्टौ तथापि तेन दुष्टेनाऽऽवां तिरस्कृतौ। आवां सप्तघण्टापर्यन्तं तत्र स्थित्वा निराशासमुद्रे प्रक्षिप्ताविव सूर्यदर्शनविरहे च म्लानपद्मे इव निरस्तहर्षौ मुम्बापुर्यामेव स्वस्थानं गतवन्तौ।

कथम्?। स्वकीयां पुत्रीमपि द्रष्टुं शक्तौ न जातौ?। देवराजो वदति।

''द्वितीयेद्युः पुनरावां तत्र गतवन्तौ। विशालभवनस्य मुख्यकक्षे यवनो गायकः कतिचिज्जनान् वदति स्म—अधुना वैभव्याः गीतस्य मूल्यं वर्धितमिति। तेनाऽऽवां विलोकितौ किन्तु नाकारितौ न च स्थानं प्रदत्तं नापि वैभवीमिलनं कारितम्। तद्दिनेऽपि पञ्चघण्टापर्यन्तं तत्र स्थित्वाऽऽवां मुम्बापुर्यामेव स्वस्थानं गतवन्तौ। तत्र तदाऽऽवाभ्यां वैभवी दृष्टा। साऽऽवां दृष्ट्वा सवाष्पगद्गदं विलापं कुर्वन्ती आवां प्रति धाविता।''

''अहो बालिकायाः मातृपितृस्नेहः!।'' देवराजो गदितवान्।

''वैभवी धाविताऽऽवां प्रति। किन्तु मध्यमार्ग एव यवनेन रोधिता



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दृढं च ग्राहिता। सा स्वमोक्षणाय यतमाना यवनेन कक्षस्यान्तः स्थापिता। मम क्रोधो ज्वलन्नग्निरिव निरोद्धुमक्षमो जातः। अहं धावितः। तं च यवनं वामहस्तेन दृढं गृहीत्वा दक्षिणहस्तेन मुष्टिभिस्ताडितवान्। दास-दासीगणो रक्षकाश्च तत्र धाविता मां च नगररक्षाधिकारिणे बन्धनार्थं दत्तवन्तः। विशाला विलापं कुर्वन्ती नगररक्षाधिकारिणं भृशं कथितवती—अरे! मम पतिर्नैव बन्धनार्थं गृहीतव्य। स पापी यवनगायकः आवयोः पुत्रीं स्वभवने निरुणद्धि। आवाभ्यां च न यच्छति। कृपया आवयोर्वैभवीं यच्छन्तु भवन्तु इति। किन्तु विशालां पुनः पुनः पार्श्वे प्रक्षिप्य नगररक्षाधिकारी मामत्र कारागारे निक्षिप्वान् कथितवांश्च—राष्ट्रपतिसम्मानितस्य यवनगायकस्य शत्रो! सर्वकारनियमान् न जानासि किम्?। त्वं तु गत इति।

'विश्वनाथ! किंनामाऽयं नगररक्षाधिकारी?' देवराजः पृच्छति।

न जाने इत्युक्त्वा विश्वनाथः स वाष्पगद्गदं रोदिति।

देवराजो नतमस्तकः स्वासन्दीं दृढं प्रगृह्य भूमौ दृष्टिं निक्षिपन् वाणीविमुक्तो भवति चिन्तयति च—नगररक्षाकार्यालये किमिदम्?। रक्षका एव भक्षका इति श्रुतमेव किन्त्वत्र रक्षका एव भक्षकसहायाः!। केनाप्युपायेन मया विश्वनाथस्य पुत्री प्रत्यानेतव्या। तस्मै च दातव्या। राष्ट्रसम्मानितस्य यवनगायकस्य साम्ना वा दण्डेन वा सत्यानाशः कर्तव्य एवेति।

द्वितीयेद्युः कारावासे स्थितो विश्वनाथो देवराजमदृष्ट्वा रक्षा-कर्मचारिणं पृच्छति। महाशय! अधिकारिमहोदयो न दृश्यते?।

न जाने। कदाचित् मध्याह्ने आगमिष्यति।

देवराजस्तद्दिने नाऽऽयाति। तृतीयेद्युरपि चतुर्थेऽपि दिवसे नाऽऽयाति।

पञ्चमे दिवसे विश्वनाथो मध्याह्नकाले कारागृहे सुखासीन उपविष्टस्तदानीं कारगृह-द्वारम् अपावृत्तं तत्र च यवनो गायको द्वाभ्यां रक्षाधिकारिभ्यां बलात् निक्षिप्तः। अव्यवस्थितकेशः कतिचित्स्थलेषु



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



च छिन्नवस्त्रो यवनो गायको विश्वनाथं कोपदृष्ट्या पश्यति। कारागृहद्वाराद् बहिस्तिष्ठन् देवराजो वदति। आगच्छ विश्वनाथ! बहिरागच्छेति।

विश्वनाथ आश्चर्यकोपदैन्यभावयुक्तेन मुखेन देवराजं यवनगायकं कारागृहं च पश्यन् बहिरागत्याऽञ्जलिं बद्ध्वा देवराजं पृच्छति। किमिदम्?। अनेन किं कृतमिति। देवराजः कथयति। मुहर्तं तिष्ठ। प्रथमं तावत् त्वमस्मात् कार्यालयाद् बहिर्भागे तिष्ठन्त्यौ पत्नीं च पुत्रीं च पश्य। गच्छ शीघ्रमिति।

विश्वनाथो हर्षोत्फुल्लनयनो बहिर्धावितः। कतिचित् कालानन्तरं स सपत्नीकः पुत्रीसमेतश्च कार्यालयान्तरागतस्तेषां प्रसन्नवदनानि विलोक्य देवराजो वदति।

गच्छाऽधुना। श्वः सायंकालेऽहं सपत्नीकः पुत्रीद्वयसमेतश्च युष्मद्गृहमागमिष्यामि। वैभव्याः शास्त्रीयं गीतं श्रोष्यामः। रात्रिभोजनं च करिष्यामः। तदनन्तरं तव किमिदम्?। इति प्रश्नस्य प्रत्युत्तरं त्वं प्राप्यसि?। विश्वनाथो विशालां वैभवीं च गृहीत्वाऽत्यन्तं प्रसन्नहृदयो गृहं प्रयाति।

द्वितीयेद्युर्देवराजः सपत्नीकः पुत्रीद्वयसमेतो विश्वनाथगृहं प्रविशति। तत्र सर्वे विनोदवार्तालापं कुर्वन्ति। वैभवी शास्त्रीयगीतं गायति। देवराजस्य पुत्र्यौ श्रीकरी सुषेणा चापि गायतः। विश्वनाथः पृच्छति— अधिकारिमहोदय! त्वमधुना स्पष्टं कथयतु कथमेतत् साधितमिति। देवराजः कथयति—

"त्वां शोकसागरे निमग्नं विलोक्य मयैतद् असंशय्यं भूत्वा तवाऽवस्थां च विदित्वाकथमेष दुष्टो गायको निजापराधफलं प्राप्नुयादिति मनसि चिन्तयित्वा दूरदर्शनस्य कर्मचारिभिर्मिलित्वा योजना मया रचिता। तदनुसारं तैः कर्मचारिभिः सह केमेरास्पीकरादिसमेतैः यवनगायकस्य विशालं भवनमहं प्रविष्टवान्। गायकस्य शास्त्रीयसङ्गीतविषये प्रावीण्यं दूरदर्शने प्रस्तुतकरणाय वयमागता इति कथयन्नहं तस्य दुष्टस्य



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुटुम्बिजनान् शिष्यशिष्यादिकं च प्रश्नान् विधाय समग्रं कार्यक्रमं प्रदर्शयिष्य इति कथितवान्। क्रमशः सर्वे तत्राऽऽगताः। किन्तु तव पुत्री वैभवी न दृष्टा। अतः साक्षात्कारान्ते तस्य भवनस्य छायांकनमपि करिष्याम इति गदित्वा तेन गायकेन भृशं निरोधितोऽप्यहं सर्वान् कक्षान् क्रमशो गत्वाऽपावृणोत्। तेष्वेकस्मिन् कक्षे वैभवी कक्षस्य कोणे भीता हरिणीव पञ्जरबद्धा पक्षिणीव किञ्चिदाक्रमणभीता च शत्रुबालेव रुदन्ती विलोकिता। क्रुद्धो गायको यदा मां रोधयितुं प्रवृत्तोऽपि दूरदर्शन-कर्मचारिभिः संपरिवृत्तस्तदा तत्सङ्घर्षस्य लाभं गृहीत्वाऽहं गृहाद्बहिरागतो वैभवीं च स्वपत्न्याः समीपे स्थापयित्वा तां रक्षाकार्यालयं प्रति गन्तुं कथयित्वा चाऽहं पुनर्गायकस्य भवनं प्रविष्टवान्। तदा मया सह कतिचिद् रक्षाधिकारिणोऽपि सहागता आसंस्तैर्गायकं गृहीत्वा वयं सर्वे रक्षाकार्यालयमागतवन्तः।''

विश्वनाथः कराञ्जलिं बद्ध्वा देवराजसमक्षं किञ्चिदप्यनुक्त्वा तिष्ठति। देवराजस्तु वैभवीं स्वपुत्रीभ्यां खेलन्तीं हसन्तीं च पश्यति विश्वनाथो विशाला च देवराजकृतं कामदानवस्य विनाशं मनसि प्रशंसतः भविष्यं च सुरक्षितं विलोकयतः। प्रफुल्लितहृदयां स्वपत्नीं पुत्रीभ्यां सह गृहीत्वा देवराजः स्वगृहं प्रयाति।

सी-१/२, डॉ० सी०एस० पटेल-इन्क्लेवः,
३, प्रतापगंजः, वडोदरा-३९०००२

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# "अजहरस्य प्रत्यागमनम्"

—डॉ० कीर्तिवल्लभः शक्टा

किं करोमि क्व गच्छामीति चिन्तयन् गतमासे पितृविहीनत्वं गतः अजहरः मातुः समीपं समागत्य उक्तवान्—

"अम्ब! पितुः दिवंगतेऽद्य बहूनि दिनानि व्यतीतानि परं तव रोदनं न समाप्तम् एवं रोदनेन किं भविष्यति? सत्यमिदं यत् तव रोदनं श्रुत्वा न कदापि पितृचरणाः कब्रात्! बहिरागमिष्यन्ति। अतः चिन्तां त्यज, अहमद्येव लखनऊ नगरं गत्वा तत्र किमपि कार्यं कृत्वा प्रतिमासं तुभ्यं यथाशक्तिः धनादेशेन धनं प्रेषयिष्यामि।"

सलीमा उवाच पुत्र! समीचीनमेव कथयसि। यदि त्वं लखनऊं प्रति गन्तुमिच्छसि तर्हि प्रथमं मस्जिदं गत्वा खुदां सम्प्रार्थ्य मौलवी-महाभागदनुमतिं स्वीकृत्य तदनु ग्रामस्य शिवमन्दिरं गत्वा शिवमपि समाराध्य पण्डित शिवनाथात्गमनमुहूर्तं विवेच्य त्वया प्रस्थानं करणीयम्। जानीहि आपुरातनात् अस्माभिः नवकार्यस्य प्रारम्भे शिवाराधनाया सह सर्वदा मुहूर्तान्वेषणं कारितम्। मन्ये ग्रामेऽस्मिन् हिन्दू मुस्लिमानां चैकतायाः इदमेव रम्यः स्वरूपम्। अल्लाहं मनसि कृत्वा पुनः कथयामि एकतायाः विरुद्धं किमपि नाचरणीयम्।

लक्ष्मणपुरस्थं चारबाग इति जंकशने बहुजनसम्मर्दः आसीत्तदानीम्। अजहरः रेलयानादवतीर्य यदा बहिरागतः तदा पुनः क्व गच्छामीति तस्य हृदिस्था चिन्ता सम्वर्धिता। बहवो त्रिचक्रचालकाः क्व गमनं, क्व गमनमिति ब्रुवन्तस्यान्तिकं समागताः, इतः पूर्वं तेन एतादृशं दृश्यं न कदापि दृष्टः आसीत।

तस्य मुखाकृतिं विलोक्य एकेन त्रिचक्रचालकेन कथितम् "चिन्तयामि त्वं प्रथम वारं लखनऊ नगरं समागतः, क्व गम्यते त्वया स्पष्टं वद वा किमपि विशिष्टं कार्यं स्यात् तर्हि मामवबोधय, अहं तव साहाय्यं करिष्यामि। मुस्लिमं तं मत्वा किंचिद् आत्मीय भावत्वेन तेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्मै स्वाभिप्रायः प्रकटितः"।

त्रिचक्रचालक उवाच "अहमेकं पुरुष–विशेषं सम्यग् जानामि यः भवादृशेभ्यः युवकेभ्यः सेवाकार्यं ददाति।" मया सह चलतु सः नूनमेव तुभ्यं सेवा–कार्ये नियोजयिष्यति आम् इत्युक्त्वा अजहरः तेन सह त्रिचक्रमुपविश्य नगरमध्ये एकस्यां विपणिकायां सम्प्राप्तः। तत्र त्रिचक्रचालकेन एकेन पुरुषेण सह तस्य परिचयं कारितः। विपणिकायाः व्यवस्थापकेन कथितं भोः! सौभाग्येन समुचिते समये समागतोऽसि। अद्य अत्रैव मम गृहे निवासं कुरु श्वः प्रभाते इतः सेवां प्राप्य दश संख्यकाः युवानः प्रशिक्षणं प्राप्तुं वायुयानेन केरलं गमिष्यन्ति। तव चिटिकायाः व्यवस्थां करोमि तैः सह त्वमपि तत्र गमनार्थं सुसज्जितो भव। अजहरेण तत्र स्वपारिवारिकी समस्यायाः विषयमवलम्ब्य किमपि कथितम्। व्यवस्थापकेन रूप्यकाणां पञ्चसहस्रात्मिकां धनराशिः स्यूतकात् निष्कास्य अजहरस्य हस्ते कृता कथितञ्च चिन्तामास्तु सद्यः पत्रालये गत्वा मात्रे धनादेशं कुरु। प्रशिक्षणान्ते प्रचुरतरं द्रव्यं तव पार्श्वे भविष्यत्येव। चिन्तां त्यक्त्वा प्रशिक्षणाय मतिं कुरु, प्रशिक्षणं प्राप्य तव कार्य–साधने किमपि कष्टं न भविष्यति। अत्र सरलहृदयेन अजहरेण सहजतया तस्य वचनेषु विश्वासं कृत्वा पौनः पुन्येन किमपि पृष्टुं न स्वीकृतम्।

अपरेद्युः प्रभाते एव तत्रैको लघु बसयानः समागतः, बसयाने बहवो युवानः आसन्। विपणिका व्यवस्थापकेन कथितं भो युवक! त्वमपि गमनार्थं शीघ्रतां कुरु। यानमुपविश्य सः वायुयानानां स्थगन–स्थले (एयरपोर्टे) सम्प्राप्तः। सर्वे युवानः वायुयाने समुपविष्टाः। यदा वायुयानः त्रिवेन्द्रम् इति स्थले स्थगितः तदा एकेन पुरुषविशेषण आदिष्टाः सर्वे युवानः वायुयानात् पृथिव्याम् अवतरिताः। तदनु लघुशकटिकायाः माध्यमेन गहनतमे निर्जनारण्ये प्रविष्टाः। तत्र यदा तेन ज्ञातं यत् सः आतङ्कवादस्य प्रशिक्षणार्थमत्र लक्ष्मणपुरस्थितेन पुरुषेण



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सम्प्रेषितः तदा तस्य मनसि महत् कष्टमभवत्। रात्रौ निद्रापि नायाता तस्य नयनयोः, पलायनस्य विचारः मनसि प्रादुर्भवत् परं तस्य स्यूतके यत्किमपि द्रव्यमासीत् तत् सर्वं शिविरसञ्चालकेन पूर्वमेव निग्रहीतः आसीत्। चिन्तासागरे निमज्य संकल्पविकल्पेन सह रात्रिर्व्यतीता तेन।

प्रातः सर्वेषां गणनया साकं शिविरप्रमुखेन कथितं ह्यः लखनऊतः पञ्जीकरणरहितः यः अकबरः अत्र आगतः सः मम पार्श्वे आगच्छतु स्व पञ्जीकरणञ्च कारयतु। अजहरेण चिन्तितं अयमेव शोभनः समयः यदहं एतैः सह मिथ्या व्यवहारे समर्थः भवितुं शक्नोमि यतो हि लक्ष्मणपुरात् अकबरेति मम नामोल्लेखः जातः। अतः क्षिप्रं तेन शिविराध्यक्षस्य समीपे स्व नाम्ना सह गृहसंकेतानां त्रुटिपूर्ण विवरणं प्रदत्तम् एवं तेन सर्वैं सह मिलित्वा तेषां सर्वेषां स्वरेण कार्येण सह च स्वात्मानमनिच्छयापि मेलयित्वा तद्दिवसः व्यतीतः।

रात्रौ तस्य मनसि वारं वारं स्वग्रामस्य हिन्दू-मुस्लिमानामेकतायाः सह मातुः वचांसि सहजतया समायन्ति स्म। तस्य कर्णयोः मात्रा कथितमासीत्यत् "पुत्र! प्राक्तनात्साम्प्रतं यावत्" अत्र हिन्दूनां मुस्लिमानाञ्च समाना संख्या, समाना मैत्री सौहार्दञ्च। हिन्दूनां शिवमहोत्सवे होलिकादि-अवसरेषु च वयं सोत्साहेन तैः सह मिलित्वा शोभां वर्धयामः, ईदादि महोत्सवेषु तेऽपि सश्रद्धया अस्माकम् उत्साहं संवर्धयन्ति। पुत्र! श्रूयते इदानीं केचन जाल्माः वैदेशिकाः ये अस्माकं राष्ट्रस्य उन्नतिं नेच्छन्ति ते अत्रागत्य नवयुवकान् दुष्चक्रे प्रेषयन्ति तेषां माध्यमेन आतंकजालं प्रसारयन्ति। अतः त्वया तादृशेभ्यः सावधानतया वर्तितव्यम्।

परं मम तु "प्रथमग्रासे मक्षिकापातः," सेवाप्राप्त्यर्थं यावत् गृहात् बहिर्निगतः तावदेव आतंकवादिनां प्रांगणे पतितः। पुनः सः अचिन्तयत् अहो! दृढनिश्चयेन संकल्पेन च किं न भवति? अतो मयापि श्वः अरुणोदयात्पूर्वमेव इतः पलायनं कर्तव्यं खलु। इति विचिन्त्य



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लघुशंकायाः व्याजेन सह सः पलायनस्योपायान् अन्वेषयन् शयन कक्षातः बहिर्निर्गतः। तत्र दृष्टस्तेन एकः भुशुण्डिधारकः प्रमुखद्वारे स्थितः अपरश्च कृत्रिम शिविरस्य पश्चिमायां सावधानेन इतस्ततः भ्रमन्नस्ति।

इत्थं शिविर-प्रांगणस्य सम्यग् निरीक्षणं कृत्वा सः पुनः शयन-कक्षायां समागतः। तत्र प्रथमं तेनाति सावधानतया स्व वस्त्रोपाहनादि-कानि लघु स्यूतके निर्बन्धितानि तदनु शनैः शनैः बहिरागत्य एकस्मिन् पुष्पनिकुञ्जे निलीनः अभवत्।

इदानीमर्धरात्रिरासीत्। सहसा तेन दृष्टः परिसरस्य पृष्ठभागे यः भुशुण्डिधारकः आसीत् तेन अनया शंकया यत् मुख्यद्वारतः तु कोऽपि प्रशिक्षणार्थी पलायितुं समर्थो न भवति, न च कोऽपि अनेन मार्गेण अन्तः प्रविष्टुं शक्नोति, इति विवेच्य द्वारिस्थितः द्वारपालः धूमपानार्थं विशेषेण संकेतेन आमन्त्रितः।

यदा तौ धूमपाने निमग्नौ सञ्जातौ तदावसरं प्राप्य अजहरेण झटिति विद्युत्वेगेन द्वारस्थितामर्गलां समुद्घाट्य द्वारं पिधाय वेगेन पलायनं कृतः।

गाढान्धकाररात्रिः गहनं वनं, कण्टकपूर्णा वसुन्धरा पृष्ठतः अन्वेषकानामातकंवादिनां भयम् अपरिचितं सर्वं वातावरणञ्च। एतादृशीमवस्थायां नग्नाभ्यां पदाभ्यां सः अनवरतं द्विकोशं यावत् त्वरितगत्या धावितः। अनेन तस्य पादयोः कण्टकैः भूरिशः छिद्राणि कृतानि। असहनीयां वेदनां सोढ्वा किञ्चित् विरम्य तेन स्यूतकात् उपानहद्वयं निष्कास्य परिधानेन सह इतस्ततः दृष्टपातं कृतः पुनः धावन् अग्रेसरः सन् क्वचित् सिंहमुखात् क्वचित् वनगजानां समूहात्क्वचिच्च केरलीयानां जलौकानाम् ओघात्स्वात्मनां रक्षयन् अरुणोदयात्पूर्वं कश्मिमश्चन् ग्रामात्वहिः सम्प्राप्तः। सहसा तस्य कर्णयोः रेलयानस्य ध्वनिः आयातः। अतः अनुमानेन सह अरुणोदये रेलयानस्य स्थगनस्थले सम्प्राप्तः। चिटिकां विनापि यानस्य सामान्य शायिकां प्रविष्टः। कथं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कथमपि सः चिटिकानिरीक्षकात्स्वात्मानं संरक्ष्यन्कोयम्बटूर इति नगरे रेलयानात् उत्तीर्य नगरं प्रविष्टः। अत्रापि भाषायाः विषमता आसीत् परं तस्य किंचित् सौभाग्येन एकस्मिन् भोजनालये भाण्डादीनां प्रक्षालनकार्यः तेन बुबुक्षाया शान्त्यर्थं स्वीकृतः एवं केनापि प्रकारेण मासं व्यतीत्य सः लक्ष्मणपुरं समागतः।

तत्र पुनः सः अचिन्तयत् यत् मम पार्श्वे तस्य विपणिका व्यवस्थापकस्य ऋणमस्ति "परेषां धनादिकस्य निग्रहणं न शोभनम्", अतः मया तस्यां विपणिकां गत्वा व्यवस्थापकस्य नामसंकेतादिकं स्वीकृत्य गृहं गन्तव्यतम्।

येन गृहं गत्वा तस्मै रूप्यकाणां प्रेषणे सौकर्यं भविष्यति। चिन्तयामि मम आतङ्कवादिनां समूहात् पलायनेन स मह्यं क्रोधयुतो भविष्यति परं किं "सत्यार्थे मरणं वरम्" अतः तत्राहं कथयिष्यामि भवता प्रदत्ता सेवा मह्यं न रोचते। इति विचिन्त्य सः पुनः त्रिचक्रं स्वीकृत्य तस्यां विपणिकां सम्प्राप्तः।

परं किं तत्र तु विपणिकायाः अवशेषमपि नासीत्। जनैः श्रुतं तेन व्यवस्थापकस्य आतंकवादिभिः सह सम्बन्धः आसीत्। अनेन अज्ञातकारणेन किंचित् त्रुटिविशेषेण रहस्योद्घाटनस्य सम्भावनामाकल्प्य तैः जाल्मैः विपणिकायां भीषणतमो बम्बविस्फोटः कृतः येन सपरिवारं विपणिकाव्यवस्थापकः मृतः। अतः किं कर्त्तव्य विमूढः अजहरः तूष्णीं भूत्वा स्व ग्रामं प्रति प्रत्यागतः।

—शारदाज्योतिर्भवनम्,
एम०ई०एस० कैम्पसम्मुखे,
चम्पावतम् (उत्तराखण्डः)

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सेवा

—वासुदेव वि० पाठकः

यथाचारस्तथा नूनम्
उपदेशस्सुनिर्मलः।
आचारस्य प्रभावश्चेद्
उपदेशः फलत्युत॥

अस्माकं भव्ये भारते, 'नर्मदा' नाम्नी अस्ति लोकमाता। सा 'रेवा' इत्यपि कथ्यते। पवित्रे तस्यास्तीरे तीर्थबाहुल्यं, तथैव महापुरुषाणामपि बाहुल्यम्। पवित्रायाः अस्याः एव तीरे, आचार्येण शङ्करेण प्राप्तः गुरोः उपदेशः।

कथ्यते यत् सद्गुरवः उपदिशन्ति स्वकीयेन उदात्तेन आचरणेन।

अत्र, नर्मदायाः तीरे एव, गङ्गनाथनामकं भव्यं तीर्थमस्ति। भारतराष्ट्रस्य सङ्ग्रामकाले अत्र, शासनविरुद्धं केन्द्रमासीत्। ब्रह्मचारिणा ब्रह्मानन्देन सह अरविन्दघोष सदृशाः बहवः सम्मिलिता स्वातन्त्र्यसङ्ग्रामे अत्र। अतश्च, राष्ट्रतीर्थमिदम् इति कथ्यते। ब्रह्मचारिणा ब्रह्मानन्देनात्र सारस्वतोपासना, अन्नपूर्णायाश्च आराधना कृतासीत्।

अस्य ब्रह्मानन्दस्य प्रोज्ज्वलायां परम्परायां कैलासानन्द–नामकः ब्रह्मचारी आसीत्। तस्यापि राष्ट्रभक्तसदृशं परोपकारप्रवृत्तं चासीत् धन्यं विशिष्टं च व्यक्तित्वम्। उदात्तेन प्रभावेन तस्य, परिसरस्थेषु ग्रामेषु बहवः तस्य आसन् शिष्यवर्गे। गङ्गानाथाश्रमेऽत्र, वारं वारं सत्सङ्गाः भवन्ति स्म। उपनिषच्चर्चा, संस्कारवार्ता, राष्ट्रविकासः, सेवार्थं संवादाश्चापि अत्र क्रियन्ते स्म।

एकदा शिष्यवर्गेण सह, प्रश्नोत्तररूपेण गुरुः कैलासानन्दः धर्मालापं करोति स्म। निर्व्याजतया निःस्वार्थथावेन सेवा कार्या, इत्यादिकं तेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सोदाहरणं ज्ञापितम्।

अत्रान्तरे, कोऽपि कुष्टरोगग्रस्तः जनः तत्र समागतः। महती पीडासीत् तस्य। बिभत्सं घृणास्पदं च तस्य दर्शनम्। दुर्गन्धेन त्रस्ताऽभवन् सर्वे तत्रोपस्थिताः।

कथमपि, तं बहिः कर्तुम् ऐच्छन् सर्वे। केनापि तथा सङ्केत चेष्टापि कृता।

एवं सत्यपि, गुरोः कारुण्यमयेन प्रभावेन, न कोऽपि तं निष्कासयितुं शक्तः, प्रवृत्तः वा। गरीयानेव महात्मनः प्रभावः।

तदनन्तरं, शिष्याणां मनोभावं बुद्ध्या, गुरुः उत्थितः। अकथयित्वा किञ्चिदपि, सत्वरमेव, रुग्णस्य समीपमगच्छत् सः। तेन पीडितस्य सुश्रुषा समारब्धा। तस्य अंसे हस्तं निवेश्य, आश्वासनवचनैः आश्वासितश्च रुग्णः। गुरोः अभिगमं, सेवाकार्यं च दृष्ट्वा, शिष्या अपि परस्परं सङ्केतं कृतवन्तः।

एकैकशः उत्थाय, तैरपि सेवाकर्मणि सद्योगः समारब्धः।

बालका अपि, संलग्नाः अभवन् सेवाकार्ये। झटिति झटिति, एकः व्यजनमानयत्। अन्यः कार्पासम् आनयत्। व्रणशुद्ध्यर्थं केनापि जलमानीतम्। कोऽपि औषधमानयत्। संयुज्य औषधं, केनाप्यानीतेन पट्टेन यथोचितः बन्धः अपि कृतः। शनैः शनैः रुग्णः पीडाशान्तिमन्वभवत्। कृतज्ञताभावस्य प्रकटितः तेन। सेवाकर्मणि शिष्यैः कृतेन सहयोगेन तुष्टः गुरुः प्रमुदितः।

रुग्णेन सह प्रीत्या वार्तालापश्च आरब्धः गुरुणा। तेनोक्तम्—भ्रातः! कुत्रतः समायातः त्वम्? कथं तव एषा दशा संजाता?

प्रणम्य, रुग्णः उक्तवान् यदहं वटोदरतः अत्र आगतः। मम मातामहः स्वातन्त्र्यसैनिकः आसीत्। आङ्ग्लैः कृते अत्याचारे, सः प्राणानत्यजत्। पिता तु मे दीर्घकालपूर्वमेव दिवंगतः। मातापि तस्य विरहे दुःखं सोढुमसमर्था, मासत्रयानन्तरमेव परलोकं प्रयाता। अहं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मातामहस्याश्रये आसम्। दारिद्र्यं मातामहस्यासीत्। पोषणक्षमश्चाहारः अस्मत्कृते स्वप्नेऽपि नासीत्। (रोदिति सः)

ततस्ततः? उक्तं केनापि भक्तेन जिज्ञासया। सः उक्तवान्-दुष्काले भवति अधिकः मासः। मातामहः, सत्याग्रहे व्यग्रः सन् बन्दी कृतः।

निगडेन बद्धं तं आङ्ग्लैः दण्डप्रहारैः महती पीडा कृता। कष्टेनानेन, प्रतिदिनं सः मरणोन्मुखः भूत्वा, अन्ते प्राणानत्यजत्।

अहं च इतस्ततः पर्यटन्, व्यवसायाभावेन, अकिञ्चनः सन्, कदा कदा बुभुक्षितः, कुक्कुरार्थं निक्षिप्तमपि अन्नं भुक्त्वा, दिवसान् यापयामास। दैवयोगेन, मम च अविवेकेन, व्याधिग्रस्तः जातोऽहम्।

तत्र, वटोदरे, मार्गे पतितं सुप्तं मां, कोऽपि सज्जनः अकथयत्— भ्रातः! त्वं गङ्गानाथाश्रमं गच्छ। तत्रस्थाः गुरवः आयुर्वेदनिष्णाताः, तव सेवां कृत्वा व्याधिमुक्तं करिष्यन्ति त्वामिति। गुरो! एषा मे कारुण्यकथा। उपकृतोऽहं भवद्भिः सेवया अनया।

गुरुः अकथयत् वत्स! उपकृतास्तु वयम्। भगवता अवसरः दत्तः सेवार्थाम्। एते सज्जनाश्चापि सेवां कृत्वा धन्याः जाताः। भ्रातर! वयं धर्मचर्चां कुर्मः वारं वारम्। किन्तु धर्मकार्यार्थम् अद्य प्राप्तः योगः।

भोः शिष्याः! भवतां कल्याणकामना मया क्रियते यद् भवद्भिः समाचरितः धर्मः। अस्माकं स्वाध्यायस्य, धर्मालापस्य च फलमिदं दत्तं देवेन।

सर्वधर्माणां सारः सेवायामेव। विवेकानन्दसदृशैः, सेवामार्गः एव स्वीकृतः। पीडिता एव परमेश्वराः, इति कृत्वा तेषां सेवा विधेया। वस्तुतस्तु।

नैव वादविवादे वा,
शास्त्रपारायणेऽपि च।
पीडितानां तु साहाय्ये,
सतां धर्मः शुभावहः॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अद्य तु, सत्यमेव धर्मिष्ठाः भवन्तः। परमेश्वरः स्वयमेव अत्रागतः अस्य रूपेण। अपरं च, सः राष्ट्रभक्तस्य सम्बन्धी, इत्यपि विशेषेण अस्मत्कृते उपकारकम्।

धर्माचरणेनानेन, प्रभुः प्रसन्नः इति पश्यामि। सः नूनं प्रसादयिष्यत्य-स्मानपि।

भ्रातरः!

**परपीडा निन्द्यैव, परिहार्या।**

**परसेवा प्रशस्यैव, स्वीकार्या॥.....**

—३५४, सरस्वतीनगरम्, औंषावाड़ी,
अहमदाबाद-१५

—:: ०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# कमला-कथा

—डॉ० कृष्णनारायण पाण्डेय 'भरद्वाजः'

पाण्डुपुरी ग्रामस्य सुशिक्षित-भरद्वाज-ऋषिवंशज-सिद्धिनाथपुत्रस्य महावीरस्य विवाहः सामवेदीग्रामस्य पुरोहित-यज्ञदत्त-बाजपेई कन्यकया सह संजातः। नव-वधू-कमलायाः स्वसुरालस्य स्वप्नभंगः जातः। पतिगृहप्रवेश-समये सर्वम् अस्तम् व्यस्तम् दृष्टम् प्राचीनविशालभवने।

''मम नवीन-गृहम् इदम्। अस्य गृहस्य अहमेव स्वामिनी अस्मि अतः साम्प्रतम् अतिथिजनानाम् सेवास्वागतम् सर्वम् दायित्वम् ममैव'' इति विचार्य सर्वम् अव्यवस्थितम् भवतु व्यवस्थितम् स्वच्छम् स्मार्तम् तथा प्रायासारम्भः कृतः।

विवाह-संस्कारमहोत्सवे सप्तपदीकार्यक्रमे कृत-संकल्पानुसारं पत्नी-जीवनसंगिनी-मित्रम् इति उपदेशः श्रुतः परन्तु व्यवहारे गृहसेविका एव आसीत् कमला युवक-महावीराय। पितृव्य श्रीशिवप्रसाद-समायोजित-बालेश्वरीसगरेश्वरतीर्थ-यज्ञसत्संगे महावीरेण श्रुतम्—

**''यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।''** विद्यालये पठितम् परन्तु स्वातन्त्र्यसमरं क्रान्तिसमये जार्जपंचमचित्रं पातनेन युवानेतृत्वे सर्वं विस्मृतम्। कपोतैः पातितं चित्रम् इति प्रधानाचार्यसूचनाद्वारा शासनबंधनरक्षितः महावीरः भयमुक्तः जातः। इंग्लिशशासनपक्षधरः ग्रामस्य भूमिपतिः गोकुलः महावीरस्य विरोधी जातः। यतः सत्तापक्षधरः गोकुलस्य निर्बलजनेषु कृतात्याचारस्य विरोधः महावीरेण क्रियते स्म। ग्रामस्य शोषिताः निर्बलाः महावीरपक्षे एकत्रिताः। गणद्वयस्य शीतयुद्धं गोकुलस्य धनबलेन ऊष्मायुतं जातम्। क्रान्तिकारी कार्यार्थम् स्वतन्त्रतासेनानी चन्द्रशेखरआजादस्य काकोरीकाण्डसदृशं दस्युता, क्रान्ति कार्यमेव? इति मत्वा महावीरदलेन धनार्थं दस्युपरिचितैः सह-परधन-लुण्ठन-पापं कृतम्। अपहृतधनं गर्वेण पत्नी कमला हस्ते समर्पितं संरक्षणाय।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



"कुत्र प्राप्तम् प्रभूतम् रजत (रुपया) मुद्राधनम्?" बिना परिश्रमं परधनग्रहणं पापं भवति। इति कथयित्वा धनपुटकं क्षिप्तं क्रोधेन कमलाद्वारा। मम पत्नी एव मम विरोधिनी? किम् अयमेव पतिव्रतो धर्मो वर्तते? एवं गर्जनं तर्जनं कृतं महावीरेण।

"कुसंगे पतितं पतिं सुमार्गे नेतुम् अयमेव उपायः। अहम् विना अन्नम् विना धनं निवसिष्यामि परन्तु परधनम् न गृहीष्यामि। अहम् पुरोहिताचार्यस्य पुत्रिका अस्मि कथम् अधर्मं करिष्यामि।

"अस्य धनस्य उपयोगः स्वतन्त्रतासेनानी जनेभ्यः करिष्यते। स्वपरिवाराय न करिष्यते।"

शोभनम् अभिनन्दनीयं तथापि ममगृहे न स्थापनीयं इदम्। स्व स्वातन्त्र्यदलकोशे स्थापनीयं इदम्।"

पतिपत्नी संवादे प्रथमयुद्धे कमलाजयः जातः।

सत्तापक्षधरः गोकुलेन सर्वं सूचितं शासनाय। महावीरदलस्य सदस्याः बंधिताः कारागारं प्रेषिताः। एकस्य एव भेदेन सर्वं दलं विच्छिन्नं जातम्। प्रतिक्रियायां महावीरसमर्थकैः सज्जनैः गोकुलस्य निन्दनं कृतम्। अनेन महावीरस्य प्रसिद्धिः गोकुलस्य हृदये ईर्ष्या द्वेषोत्पादिका जाता। महावीरहत्यार्थं गोकुलेन महावीरस्य एव नेपाली गोपालकः बहादुरः सम्प्रेरितः स्वर्ण-खण्डप्रदानप्रलोभेन।

गोपालकेन सर्वम् सूचितम् महावीराय। सर्वम् श्रुत्वा पत्नी कमला विचलिता जाता। सर्वम् ईश्वराधीनं कथयित्वा भाग्यं फलति सर्वदा इति मत्वा शरीरस्थस्य आलसस्य शरणं न गन्तव्यम्। सावधानतया आत्मरक्षोपायः करणीयः। कर्मफलम् एव भाग्यं कथ्यते। प्रतिवेशिजनैः सह कलहः तनाव कारणं भवति अतः परस्परसंधिमैत्री प्रस्ताव प्रस्तुतः। अयं महावीरः भयभीतः इति मत्वा गोकुलेन मनसा प्रस्तावः न स्वीकृतः। तस्य फलोद्याने अधिकारं कर्तुम् प्रयासारम्भः कृतः। पदे पदे महावीराय बाधोत्पादनं कृतम्।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिनरात्रिजागरणं कृत्वा पतिमहावीरजीवनरक्षाभवतु इति कमला कर्तृत्वं जातम्। कस्यापि मानवस्य हत्या महापापम् अस्ति इति वारम्वारम् कथनेन यथा गोकुलस्य दुर्भावनासीत् तथा महावीरेण न विचारितम्। सर्वेषां हितचिन्तनम् एव महावीरकमलाजीवनदर्शनं संजातम्।

**मूर्खस्य पंच चिह्नानि गर्वो दुर्वचनम् तथा।**
**हठश्चैव विवादश्च परोक्तम् नहि मन्यते॥**

शास्त्रवचनम् इदम् प्रस्तुतं कमलाद्वारा पतिदेवमहावीरसम्मुखम्। कथितं च "मया भवतः निर्देश पालनम् सदैव क्रियते परन्तु भवद्भिः मम् उक्तं न क्रियते अतः ग्रामे एव संघर्षः प्रचलति। शास्त्राज्ञानुसारम् सर्वत्र ब्रह्मदर्शनं करणीयं अतः मनसा वाचा कर्मणा कस्यापि कृते कष्टदानं न करणीयम्। युद्धहत्या मुक्ति वातावरणनिर्माणं करणीयम्।"

तव वचनम् स्वीकृतं परन्तु यदा कोऽपि दुष्टः आक्रमणं करोति रक्षार्थम् प्रतिकारः तु करणीय एव।

रात्रि समये बहादुरः समागतः। तेन कथितम् "अहम् सद्यः नेपालं गन्तुं इच्छामि। मया स्वामिभक्तिदायित्वं पूर्णं कृतम्। दुष्ट गोकुलः मारितः। भवतां विरोधकर्ता नास्ति कोऽपि ग्रामे।"

किम् आश्चर्यम् अतः परम्? मया तु न कथितं तथा पापकार्यार्थं। किमर्थं मानवहत्या पापकर्मं कृतम्? महावीरस्य प्रश्नोत्तरे बहादुरद्वारा संक्षेपेण सर्वं सूचितम्। बहादुरः स्वजन्मस्थानग्रामं नेपालं गतः। दिनद्वय-पर्यन्तम् केनापि न ज्ञातम् किं जातं यतः गोकुलः स्वगृहे एकाकी एव वसति स्म। तस्य दुष्टस्वभावकारणात् तस्य अनुजः शंकरः सपरिवारम् प्रवासितः आसीत्। शंकरः एकस्मिन् विद्यालये शिक्षकः आसीत्। गोकुलस्य एकेन जनेन यदा सः मिलितुम् आगतः तस्य गृहं सर्वप्रथमं ज्ञातं हत्याकाण्डम्। पुलिसबलम् आगतम्। महावीरदलस्य एव कार्यमिदम् इति सूचितं शिक्षक-शंकरेण। सर्वे महावीरमित्राणि ग्रामात् पलायिताः परन्तु महावीरदलस्य मानातिवारी पुलिसबलेन बंधितः। पुलिसबलत्रासे मानातिवारीद्वारा गोकुलस्य दुष्टता प्रकाशिता। सर्वं स स्पष्टं जातम्।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गोकुलहत्यादिने बहादुराय गोकुलद्वारा स्वर्णस्य इष्टिका प्रदर्शिता। "अद्यैव मम् कार्यं कुरु। धनं नीत्वा नेपालं गच्छ। तव गमनाय सर्वा व्यवस्था कृता मया।" इति श्रुत्वा बहादुरेण कथितम् "अद्य भवतः कार्यं कृत्वा रात्रिसमये मिलिष्यामि।"

अर्धरात्रिसमये बहादुरः गोकुल गृहम् गतः। तेन कथितम्—भवतः कार्यं कृतं मया। मम् शुल्कं प्रदीयताम्। अहम् अद्यैव नेपालं गमिष्यामि। प्रत्युत्तरे गोकुलेन् कथितम्—किम् प्रमाणम् अस्ति? बहादुर उवाच— प्रातःकाले सर्वम् ज्ञातम् भविष्यति। शीघ्रम् मम् पारिश्रमिकं प्रदीयताम्।

गोकुलेन किमपि न दत्तम्। विश्वासघातं दृष्टवा पूर्वनिर्धारित षडयन्त्रानुसारं महावीरदलमित्रैः सह बहादुरेण आक्रमणं कृतम्। गोकुलस्य हत्यां कृत्वा नेपालं पलायितः।

निर्दोषमहावीरः कारागारं प्रेषितः। सत्यमेव जयते सर्वदा अतः साक्ष्यस्य अभावे कालान्तरे महावीरः न्यायालये दोषमुक्तः घोषितः।

कारागारकुसंगे महावीरस्य धार्मिकजीवने व्यसनाधिक्यं जातम्। महावीरदलस्य सदस्यैः बाधामुक्तग्राम्यजीवने मांस, मदिरा, सुरा, सुन्दरी, मादकचक्रे आनन्दानुभूति-प्रारम्भः कृता। धर्मपत्नीकमलां कथनं सर्वं तिरस्कृतम्। सौभाग्यात् ग्रामे यज्ञायोजने समागत संतसमाजस्य सतसंगे महावीरहृदये संत सेवाभावना जागृता। गृहे समागत् साधु जनानां सेवाभोजनप्रसादादिद्वारा क्रियते स्म कमला माध्यमेन। सत्संगे महावीरस्य कुसंग व्यसनेषु क्रमशः नियन्त्रणं जातम् परन्तु मादक-अहिफेन-व्यसनमुक्तिः न जाता। एकः नव साधु आगतः। तेन कथितं मम् सत्संगे सर्वं परिवर्तितं भविष्यति। कालान्तरे वंचिकाम दत्वा सः नव साइकिल वाहनेन् पर्याप्त धनेन् सह पलायितः।

कमला कथितवती—ईश्वरः यत् करोति तत्सर्वं शोभनम् एव भवति। चिन्ता मास्तु। धनं तु गच्छति आगच्छति एव। भवतः व्यसन मुक्त भावना एव आशीर्वचनं साधुसमाजस्य। स्व परिश्रमेण प्राप्त धनेन एव आवयोः परिवारस्य भविष्यम् उज्ज्वलम् भविष्यति। मम् गृहे कदापि अवैधधनम् न आगच्छतु इति प्रयासः करणीयः। यथा अन्नं तथा मनः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति—

**सज्जानानां पंचचिह्नानि नम्रताप्रियभाषणम्।**
**समन्वयः, सदाचारः, विश्वबन्धुत्वदर्शनम्॥**

सामवेदी पुरोहितपरिवारस्य कमला सम्प्रेरणया महावीरेण शास्त्र-वर्णित दिनचर्या प्रारम्भः कृतः। निकटस्थ धर्मस्थले दैनिक सामूहिक-प्रार्थना शुभारम्भः कारितः। धर्मस्थले दीपप्रकाशनेन परिवारे सुखसमृद्धि प्रकाशारम्भो जातः।

एकदा गोकुलपारिवारिकैः लगुडप्रहारेण महावीरः आहतः कृतः। महावीरमित्रैः प्रतिकारे प्रत्याक्रमणं कृतम्। कपाले लगुड प्रहारेण मृत्युः भविष्यति ग्रामस्य नव युवकस्य यः धनलोभेन संघर्षे सम्मिलितः। महावीरेण एवं विचार्य स्वलगुडं तस्य शिरोपरि छायारूपेण कृतम्। "पर्याप्तं दण्डदानं कृतम्। ग्रामकलहसमाप्तिः भवेत्।" इति महावीरस्य भावना फलिता।

कालान्तरे गोकुलानुजः शिक्षकशंकरः स्वग्रामं प्रत्यावर्तितः। ग्रामस्य छात्राः सायंकाले पठितुं शंकरस्य गृहं गच्छन्ति स्म। कमला सर्वं विस्मृत्य स्वपुत्रमपि अध्ययने मार्गदर्शनप्राप्त्यर्थम् गोकुलगृहं प्रेषितवती। क्रमशः वैरभावः सौहार्दे परिवर्तितः। शुभकार्यस्य कार्यं शुभं भवति। सुशिक्षितः कमला महावीरपुत्रः रामः ग्रामस्य राजकीयविद्यालये एव अध्यापको नियुक्तः।

रामस्य विवाह महोत्सवे गोकुलानुजः शंकरस्य परिवारोऽपि आमन्त्रितः। वरयात्रायां शंकरेण महात्माबुद्ध बचनं स्मृतम्—

**नहि वैरेण वैराणि साम्यन्तीह कदाचन।**
**अवैरेण वैरशान्तिः एषो धर्मः सनातनः॥**

—मानवताकुलम्
समन्वयकुटीरम्, ई-१०५२,
राजाजीपुरम्, लखनऊ-२२६०१७



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# प्रत्युत्तरम्

—डॉ० सुदेशगौतमपंकिलः

भगवत्याः श्यामलायारालयः शिमला समुद्रात् पञ्चाधिक-द्विशततमोत्तरद्विसहस्रमीटरोर्ध्वं स्थितोऽस्ति। जनपदमिदं भारतस्योत्तरस्यां दिशि हिमवतः नगाधिराजस्य चरणेषु निजमस्तकं निधाय पितुरङ्के पुत्रमिव परं शान्त्या शेते। विश्वस्य मानफलके पर्यटनाय सर्वश्रेष्ठंस्थानंमिदमांग्लशासने भारतस्य ग्रीष्मकालीन राजधान्यासीत्। शस्यश्यामलप्रकृतेश्च भगवतीश्यामलयारनुकम्पास्मिन् पत्तने नित्यं वर्षति। क्षणे तुष्टा क्षणे रुष्टा प्रकृतिः स्वविविधदृश्यान् क्षणे-क्षणे दर्शयति। शिमला संसारमान-फलके स्वसौन्दर्यार्थं पर्यटनसुखार्थं सर्वत्र च प्रसिद्धमस्ति। प्रतिवर्षं बहवः स्वदेशीया विदेशीयाः पर्यटका अत्रागत्य स्वजीवनं धन्यं कुर्वन्ति।

त्र्यधिकशतं भूगर्भमार्गानुल्लङ्घ्य लौहपथगामिनी पर्यटकानत्रानयति नयति च। अत्यद्भुतमिदं स्थानमिदं देवगन्धर्वकिन्नरनराणाञ्च रमणस्थली वर्तते। अध्ययनाध्यापनस्य गर्भगृहेनिगमेऽस्मिन् भारतस्योच्चाध्ययनसंस्थानं समरहिल (समेरुहिल) स्थाने चकासते। यस्य निर्माणं १८८४-८५ ई० काले लार्डडफरिनमहोदयेन राष्ट्रपतिभवनमितिसंज्ञया निजनिवासाय कारितमासीत् परञ्च जाते भारते स्वतन्त्रे राष्ट्रपति डॉ० राधाकृष्णः भवनमिदमुच्चाध्ययनाय समुचितं ज्ञात्वा संस्थानाय प्रायच्छत्।

तदारभ्य विविधविषयाणाम् देशीयाः विदेशीयाः शोधार्थिनोऽत्रागत्य शोधकार्यं कुर्वन्ति। अतीव रम्यं भवनमिदं वास्तुकलायाः दुर्लभा सृष्टिः विद्यते। साम्प्रतम् शाद्वलैः च देवदारुतरुभिः आवेष्टितं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवनमिदं प्रेक्षकाणाम् लेखकानाम् च मनांसि बलादाकर्षति। अस्य संस्थानस्य पृष्ठे हिमाचलप्रदेश विश्वविद्यालयः-अद्यतनीयैः ज्ञान-विज्ञानसाधनैः सम्पन्नः शोभते। विश्वविद्यालयेऽस्मिन् विवेकानन्दाध्ययनकेन्द्रं प्रो० वीरेन्द्रमिश्रमहाभागानामध्यक्षत्वे संयोजकत्वे च शोधाध्ययनसंगोष्ठि-प्रवचनादिकार्यैः पुस्तकालयेन च पूरयति ज्ञानपिपासूनाम् पिपासाम्। अत्रैव हिमालयीयाध्ययनकेन्द्रं निजविविध-शोधकार्यैः देशस्य प्रतिनिधित्वं करोति। पत्तनेऽस्मिन् त्रिसंख्यकाः महाविद्यालयाः सन्ति। अराजकीयक्षेत्रे सेंटबीड्ज कन्या महाविद्यालयः प्रसिद्धोऽस्ति। उच्चतरमाध्यमिक-स्तरीयाः विंशतिर्विद्यालया अत्र सन्ति। तेषु डी०ए०वी०, दयानन्द-विद्यालयः, बिशपकॉटन विद्यालयश्च एडवर्ड विद्यालयः विशिष्टतां लभन्ते।

अत्रतः दशकिलोमीटरदूरं मशोबरानाम्नि निगमे परमवन्दनीय-राष्ट्रपति-सम्मानेन पूजिताश्रीदिवाकरदत्तमहाभागानां संस्कृतशोधसंस्थानं विराजते। तत्र चैका संस्कृतशोधपत्रिका दिव्यज्योतिः प्रतिमास-मांग्लमानेन पञ्चविंशतिः तारिकायां निजज्योतिभिः संस्कृतज्ञान् प्रकाशते। अतः कथयितुम् शक्यते यत् स्थानमिदं ज्ञान-विज्ञान-पिपासुनाम् कृते तक्षशिला पर्यटकानाम् च भूस्वर्गं वर्तते। शिमला नगरस्य वैशिष्ट्यमस्य मालरोडश्च रिज परिसरमस्ति। येनास्मिन् मालरोडे रिजमैदाने च भ्रमणं न कृतं तेन किमपि न दृष्टं। स लब्धनेत्रोऽपि नयनहीनः, किमर्थं शिमलासदृशेऽधिष्ठाने समागतो-मूढबुद्धिः। रिजपरिसराद् किञ्चिद् अग्रे यत्ररक्षापुरुषो भुशुण्डिकामादाय तिष्ठति। तत् स्थानं स्कैण्डल प्वाईण्ट इति नाम्ना कथ्यते। तत्स्थलं सम्मेलन स्थलमप्युच्यते। अधिकतरं शिमलास्थाः जनाः निजमित्राणि तत्रैव संमिलनाय कथयन्ति। यदि भवान् कमपि जनं परिचिनोति,



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



परञ्च तस्य निवासाधिष्ठानं न जानाति यत् सः कुत्र वसति। तदा तु भवानस्मिन् स्कैण्डल प्वाईंटस्थले तिष्ठतुं स निश्चितं भवन्तं यत्र तत्र भ्रमन् मिलिष्यति। कारणमिदं यत् शिमलानगर स्थाः जनाः मालरोडे नित्यं पर्यटन्ति एव। मालरोडादग्रे इन्दिरागांध्यान्तरिक क्रीडाक्षेत्रं, ततः मैटरोपोल च एम०एल०ए० होस्टलमस्ति। मैटरोपोले हिमाचलप्रदेशस्य विधायकानां निवासस्थानमस्ति। हिमाचलस्य सकलमन्त्रिण अस्य समीपेव वसन्ति।

अस्मादधिष्ठानादग्रे छोटा शिमला इति स्थाने हिमाचलप्रदेशस्य सचिवालयो वर्तते। रिजस्थानादग्रे "इन्दिरागान्धी आयुर्विज्ञान-चिकित्सालयः शिक्षा चा संस्थानोस्ति। यत्र चिकित्सकमहाविद्यालये वहवः छात्राः पठन्ति। पश्चिमायाम्दिशि चौड़ा मैदाने आकाशवाणी केन्द्रं दूरदर्शनकेन्द्रं, विधानसभा परिसरं च भारतीय सैनिकपश्चिम-वाहिन्याः कार्यालय, संग्रहालयश्च सर्वप्रसिद्धं सीसलहोटलं वर्तते। आंग्लशासनेऽस्मिन् होटले भारतीयानाम् प्रवेशो निषिद्धः आसीत्। अत्रैव राज्यपालनिवासः शोभते। नगरेऽस्मिन् सर्वधर्माणां मन्दिराणि मिलन्ति। यथा रिजोपरि चर्चः, गञ्जबाजारे मसजिदं वर्तते, राममन्दिरं, चन्द्र-मन्दिरम् च गुरुद्वारापि तत्रैव सन्ति। जाखूपर्वते हनुमान् मन्दिरं, दक्षिण-दिशि संकटमोचनहनुमान्मन्दिरं तारादेव्यामन्दिरं, पश्चिमायां दिशि कामना देवी मन्दिरं भ्राजते।

शिमलानगरस्य सञ्जौली उपनगरे श्री हंससत्संगमन्दिरं, गुरुद्वारा, ढींगूमातामन्दिरं, छोटा शिमलायां च मन्दिरमस्ति। नवबहारक्षेत्रे फल-विधायनकार्यालयोऽस्ति। शिमलास्थ हिमाचलप्रदेश विश्वविद्यालयः विश्वप्रसिद्धः। यत्राफगानिस्थानस्य राष्ट्रपति हामिदकरजेई सदृशः विश्वप्रसिद्धा जनाः शिक्षालाभमकुर्वन्। अस्य विश्वविद्यालयस्य पूर्व



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



संस्कृतविभागस्य अध्यक्षः विश्वप्रसिद्ध विभूतिः भूताः गुरुश्रेष्ठ-अभिराजराजेन्द्रमिश्रमहाभागः सम्पूर्णानन्द संस्कृत विश्वविद्यालय कुलपतिपदमलङ्कुर्वन्।

गद्यपद्यनाट्यलेखनस्य याः तिस्रः विधाः तासु सर्वासु पराङ्गतोऽयम् त्रिवेणिकविरुपाधिना प्रसिद्धः वालिद्वीपप्रवासे जानकीजीवनं महाकाव्यं च वामनावतरणं महाकाव्यं संलिख्य संस्कृते जगतिमहदयशः प्राप्तवान्। मयानुमीयते यदनुमानतः पञ्चाशत संस्कृत, हिन्दी, आंग्ल, भोजपुरी काव्यग्रन्थान् रचित्वा भगवती शारदायाः चरणयोः निर्वेद्य अयमाधुनिक-कालिदासः पुरातनं कालिदासमपि पृष्ठेऽकरोत्। मादृशानल्पज्ञानपि विद्यावारिधि उपाधिमदापयत्।

श्रूयते यत् शिमला जनपदे रिज मैदानादुपरि यत् जाखूपर्वतं तत्र पवन सुतोमारुतिनन्दनः यदा हिमवतः सञ्जीवनीम् गृहीत्वा समागतः तदाक्षणं तत्र विश्राममकरोत्। शिमलातः षोडश किलोमीटरं दूरे कुफरी नाम्नाविख्यातं विश्वमानफलके शशांकमिवशोभमानं पर्यटन-स्थल-मुदधिरधस्ताद् षड्विंशतिः शतं मीटरोर्ध्वं त्रिदशालयस्य-तुषारद्वारमिव शिशिरत्तौ सर्वदा हिमाच्छादितं संजायते। जनाः स्थलमिदं स्वर्गस्य प्रथमं प्रवेशद्वारमपि कथयन्ति। अत्र चीनीबंगला, कुफरी जीवोद्यानञ्च देवदारुद्रुमाणाम् सघनं काननं जनानां मनांसि बलादा-कर्षति। काननमिदमेशियामहाद्वीपस्य सर्वोत्तमं वनमस्ति। अत्रतः किञ्चित् दूरे फागूशैलं दर्शनीयस्थलं वर्तते। परितः कुक्कुरमुत्तानामिव मस्तकमुत्थाप्यगगनमण्डलं दर्शितुकामा अनेकाः लघुशैलाः विशाल-वक्षमण्डले सेवोद्यानान्युपायनमिवदधानाश्च सेवमानाः दृश्यन्ते।

शिमलातः त्रयोदश किलोमीटरदूरञ्चोदच्छितलाद् एकोनपञ्चा-शतादधिकमुत्तरद्विसहस्रमीटरोर्ध्वं मशोवरा नामधेयमुपनगरमत्रभारतस्य सर्वोत्तमफलानुसन्धानकेन्द्रं वर्तते। अस्य नगरस्य सिप्पीमेलकोऽति



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रसिद्धोऽस्ति। निवासिनः कर्मठाः दक्षाः सहनशीलाः, पुष्टाः च मनोहराः भवन्ति नार्यः प्रत्यक्षाप्सरसः रतीतुल्या कृष्कुरङ्गाक्ष्यः तीक्ष्णघोणा नयनाभिरामा मेघमालालका मनोहरा सन्ति। तद्यथानुश्रूयते एकदा पञ्चाम्बुप्रदेशादेको सरदार युवकः निजमित्रैः सह पर्यटनाय शिमलायाम् समायातः। तत्र मालरोडे न्यनाभिरामां तनुमध्यां पृथुलजघनां पीनपयोधरां खञ्जरीटनयनां कादम्बिनीकेश धरामतिशय कोमलां किन्नरीकन्या-मवलोक्य तत्रैवोपाविशत्। यदा पुनः इतस्ततोऽपश्यत् तदा सर्वा अपि भ्रमणशीलाः वनिताः तुल्या एव सन्तीति ज्ञात्वा सहसा जगाद, भो मित्र। विधिना वयं नरके पातिताः न वयं भूमौ वसामः, वयं तु नरके भ्रमामः, नाहमितः गमिष्यामि, प्रकृतिः तु अत्र वनिता तु अत्र फलानि तु अत्र, साहित्ये यद् यद् श्रेष्ठं वर्णितमस्ति तत् सर्वं विद्यतेऽत्र, किं करिष्यामः पञ्चाम्बुः प्रदेशे गत्वा तत्र। अहं तु वसाम्येवात्र को गच्छेदन्यत्र.......... ।

भो मित्राणि! किमुद्विग्नाः संजाताः यत् कथाश्रवणे "हूम्" हूम् इति न कुरथ, किं करोमि भवद्भिः पृष्टमासीद् यत् शिमला जनपदमङ्गीकृत्य कामपि कथां कथय, मा खिन्नाः भवन्तु, अहं सत्यं वदाम्यधुना कथामेव कथयिष्यामि न शिमलामभिलक्ष्य शब्दमपि वदिष्यामि। शिमला शब्दमिति संश्रुत्याहं विक्षिप्तो भवामि परञ्च न मयाधिकं कथितमिदं तु परिचयमात्रमेव।

अस्मिन्नेवदेवाधिष्ठाने भूस्वर्गे घटितैकां घटनां भवतां समक्षे स्पष्टीकरोमि। तस्मिन् समयेऽत्रांग्लानां शासनमासीत्। बहव आंग्ल-राजपुरुषा अत्र वसन्ति स्म। परतन्त्रभारतस्य ग्रीष्मकालीन राजधानी स्वसौन्दर्येण सर्वानाकर्षति स्म।

मया पूर्वमुक्तं यत् पर्वतीयाः जनाः मृदुला विनीताः सरलाः कर्मठाः च भवन्ति। वार्तामिमां तेऽपि जानन्ति स्म। अतः तेषामांग्लराजपुरुषाणाम्



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गृहे स्थानीयाजनाः एव नियुक्ता भवन्ति स्म। तेषु तेऽति विश्वसन्ति स्म। ख्रीष्ट० १९५० काले वर्कलेनामप्रसिद्ध एकोराजपुरुषः समागच्छत्। शिमलाजनपदस्य स्वास्थ्यमनुकूलं जलवायुं प्राप्य परमप्रसन्नोऽऽसीत्। तेन नवीनचन्द्रो नामधेय एकः जनः स्वकीयसचिवोनियुक्तः। नवीन-चन्द्रस्तस्य सर्वकारीयकार्यान् परममनोयोगेनासाध्नोत्। वर्कले तस्यकार्यं दृष्ट्वा परं हर्षितः आसीत्। स तस्य परामर्शं विना किमपि कार्यं नाकरोत्। तस्य गृहकार्याणि अपि तु नवीनचन्द्रस्य सहयोगं विना न पूर्णानि भवन्ति स्म। प्रशासनकार्येषु तस्य बुद्धिवैभवं दृष्ट्वा वर्कले निश्चिन्ततया शिमलाजनपदस्य भ्रमणं करोति स्म। एवमुभयोः मध्ये महतिसघनताभवत्। किन्तु, नवीनचन्द्रः सम्यग् प्रकारेणावागच्छत् यत् विदेशिकानां वर्कले सदृशनराणाम् मनोदशा कीदृशी भवति। अतः स कदापि तं स्वगृहं नानयत नच कदाहूतवान् यथोक्तमस्ति—

**कच्चा, काणा, काचरा कुण्डलकेशा होए।**
**उसके पास तब जाए, जब छुरी बगल में होए॥**

वाक्यमिदं सत्यमुक्तं केनापि स्पष्टवादिना च अनुभवीपुरुषेण। किन्तु दैवगतिरपरिहार्या सर्वदा तां लङ्घयितुं कश्शक्नोति। एकदा नवीनचन्द्रः स्वपरिवारेण सहापणमागच्छत् संध्याकाले। यदा ते निजनिकेतनं प्रति गच्छन्ति स्म। तदा नवीनचन्द्रोऽवदत् भद्रेः वयमद्य मालरोडादेव शनैः शनैः पदातिरूपेण स्वावासभूमिं गच्छामः। सा प्रत्युवाच यथा भवानुचितं मन्यते तथैव करिष्याम्यहम्। इत्युक्त्वा तेन साकं मालरोडं प्रति प्रस्थिता। तैः किञ्चिद् गतमासीद् पृष्टतः नवीनचन्द्रमालोक्य वर्कले सहसा तारस्वरेणापृच्छत्। नवीन-नवीन कुत्र गच्छसि। नवीनः सहसा पृष्ठमवलोक्य स्थिरोऽभवत्। स्वल्प वार्तालापो बभूव। तस्मिन् वार्तालापे नवीनः स्वभार्याया सुतयोः च परिचयं वर्कले तस्य पत्न्या सहाकारयत्। नवीनस्य भार्यामवलोक्य तस्य मनसि कालुष्यं समागतम्। आंग्लानाम् प्रवृत्तिं नवीनो सम्यग् जानाति स्म। अतः तेन कदापि महोदयोऽयं स्वगृहे न नीतः। एवमन्योऽन्यं शिवं स्यादित्युक्त्वा



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्व-स्व निलयं प्रति प्रस्तिथतौ।

नवीनचन्द्रः स्वभार्यायै आंगलानाम् प्रवृत्तिम् व्यवहारविषयं च विस्तृतरूपेण अकथत्। सा जगद्-नैषोजानाति यत् कुरङ्गी कदा रणचण्डी संजाता। मृदुला कदा कर्कशा कोपना कदा काली भवति। किन्तु नास्य दोषः यत्र न संस्कारा संस्कृतिः तत्र किदृशी सृष्टिः भविष्यति भवानपि स्वयं ज्ञातुम् शक्नोति। यस्मिन् देशेऽयं जातः तत्र नारी पुरुषौ केवल-मन्योऽन्यदेहक्षुधापूरकावाऽस्ताम्। नवीनः तारस्वरेण! जानामि! जानाम्यहं, परञ्चायं दुष्टोऽत्रापि देवतुल्येदेशे समागत्य तथैव चिन्तयति। अत्रापि मया श्रुतम् यदऽयंदुष्टात्मा तथाविधजनसहयोगेन तथैवाचरति।

मृदुला-कस्मिन् कृष्णप्रसङ्गे निमग्नोऽभवत् भवान्! परित्यज तस्य कामप्यन्यांवार्तां कुरु। पश्य! गगने कीदृशमिन्द्रायुधं भ्राजते। भाद्रपदमासस्य कृष्णमेघमालायामिदं शोभते? नवीनचन्द्रकटाक्षेण तां पश्यति, परस्पराक्षि संयोगः संजायते। मृदुलाकस्मादेव मनोदशा-परिवर्तनेन वक्रदृष्ट्या तमालोक्य हसति जिह्निति च।

कालो न कमपि प्रतीक्षते। निर्गता ते दिवसाः। वर्कलेमहोदयस्य चरित्रगाथापि विस्मृतिगर्ते निमग्नाभवत्। मृदुलानवीनचन्द्रश्च ससुखेन निज गृहस्थाश्रमे संरतौऽऽस्ताम्। एकस्मिन् दिवसे वर्कलेमहोदयोऽवदत् नवीन! त्वयावश्यकपत्राणि गृहीत्वा दिल्लीं प्रति गन्तव्यमस्ति। आम्! श्रीम् इत्युक्त्वा नवीनचन्द्रः—आवश्यकपत्रादीन् पञ्जिकायां संयोज्य दिल्लीं प्रति गन्तुं तत्परोऽभवत्। अग्रिमदिवसे गन्तव्यः प्रति गमना-मावश्यकमासीत्। रात्रौ गृहमागत्य नवीनचन्द्र स्व प्रियामवदत् मृदुले प्रातः अहं दिल्लीं प्रति गच्छामि। अतः मम वसनानि चावश्यकवस्तूनि मञ्जूषायाम् स्थापय। नवीनचन्द्रस्य वार्तां श्रुत्वा सा तस्य सन्निधे समागता अपृच्छदधीरतया दिल्ली गमनस्य कावश्यकता संजाता। वर्कलेमहोदयाः स्वयमेव गच्छन्ति स्म। अधुना भवन्तं किमर्थं प्रेषयति सः। नवीनचन्द्रो धैर्येण प्रत्युवाचाद्यममकरणीयमेव कार्यमस्ति। अतः माम् प्रेषयति सः मया च दिल्ली दृष्टापि नैवेका क्रियाद्वयर्थकरीर्भविष्यति। सर्वकारीय-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कार्यमपि करिष्यामि भ्रमिष्यामि च। मृदुलारुद्धकण्ठा अहमत्रैकाकिमि स्थास्यामि। कथमेकाकिनीबालौ त्वया साकमत्र स्तः। एको तु अहम् गच्छामि। मृदुलावदत् भवन्तः पूर्वमपि गच्छन्ति स्म परञ्चाहं न कदापि भयातुराभवम्। अद्य वेपते मे मनः। नवीनचन्द्रो तां स्वबाहुमध्ये आकुञ्चय जगाद् वृथा विभेषि त्वं। अहं पञ्चदशाहोभिरनन्तरं तव सन्निधे भविष्यामि। एवमग्रिम्दिवसे नवीनचन्द्रो दिल्लीं प्रति प्रस्थितः। तदा दूरवाणी तु दूरे पत्राण्यपि यथासमयं न मिलन्ति स्म।

वर्कलेमहोदयस्य मनसि मृदुलाप्रति तदैव दुर्भावना समागतासीद् यदा तेन सा नवीनचन्द्रेण साकं दृष्टासीत्। नवीनचन्द्रं संप्रेष्य सोऽपि निजयोजनायां साफल्यं प्राप्तुं तत्परोभवद्। अतः सोऽपि संध्याकाले भ्रमणव्याजेन निजभार्यां कक्षे परित्यज्य नवीनचन्द्रस्य गृहं प्रति चचाल। तस्यालयस्यादूरे नवीनचन्द्रस्य सुतौऽक्रीडताम्। तानवलोक्यहर्षितमना वर्कले महाभागः तयोः समीपमगच्छद्–अपृच्छत् च पुत्रौ किं कुरुतः भवन्तौ। वर्कलेमहोदयं दृष्ट्वा सुतः गृहाभ्यन्तरे गतः निजाम्बामाकृष्य द्वारेऽऽनयत्। अग्रे वर्कलेमहोदयमवलोक्य सा सहसा भयभीताभवद् परञ्च साहसं कृत्वावदत् भवानत्रास्माकं गृहे, "अहोभाग्यमादृशाम्", यद् भवादृशोपुरुषोऽस्माकं गृहे प्राप्तः, समागच्छतु—समागच्छतु भवान्। एवं तं कक्षेऽऽनयत्। उपविशतु भवान्, जलमानयामि। वर्कलेमहोदयेन साकं शिष्टाचारपूर्णा वार्ताभवत्। पुनः सावदत् यदि भवान् (तैः) नवीनचन्द्रेण साकमपि वा तेषां समक्षे समागच्छति तदा तु कीदृशमानन्दं अभविष्यत्। अद्य भवतां कापि सेवा नाभवद्। वर्कले जगाद अहं तु अत्र पर्यटनाथ समागतोऽस्मि। भवत्या सुतौ दृष्टवाऽत्र समायातः। उपविशतु भवानहमधोदुग्धमानयामि। तया स्वल्पाहारमुष्णोदकमानीतं वर्कले शनैः शनैः चायपानमकरोत्। घटिकाष्टवादनस्य नादमकरोत्। वर्कले जगाद किं, अष्टवादनस्य घण्टिकैषा अहो, वार्तासुकालः निर्गतः। अहमधुना गन्तुं समीहे। मृदुला! अन्धकारः परिव्याप्त सर्वतः। भवान्



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


रात्रौ भोजनं कृत्वैव गच्छतु। अहं शीघ्रमेव भोजनं पचामि। सोऽवदत् भवत्याः करनिर्मितं भोजनं सुस्वादुः भवति। इदं तु मया स्वल्पाहारेणैव ज्ञातम्।

मृदुला भोजननिर्माणार्थं महानसे गता। वर्कले बालकैः सह वार्तासु निमग्नोऽभवद्। मध्ये मध्ये च मनसि समागता या वासना तस्यापूर्तेरुपायं सफलतामार्गे गच्छन्तं मन्यमानः परमहर्षितोऽऽसीत्। स्वभावनिपुणाः वनिताः भावैः सर्वमवगच्छन्ति। मृदुलापि मनसि उपायमचिन्तयत्। स्वल्पसमये भोजनं निर्मायानीतवती। हस्तप्रक्षालनाय जलं दत्त्वा तया भोजनं वर्कले महोदयस्य समक्षे स्थापित स्वयं च सविधे स्थित्वा पुनः पुनरापृच्छत्। अधुना भवान् पोलिकां गृह्णातु, तण्डुलानि गृह्णातु, दधि ददामि। एवं भोजनं कारयति। भोजनानन्तरमेकस्मिन् रजतपात्रे कानिचिद् निम्बुकानि विविधवर्णैः रञ्जित्वानयत्। वर्कले अपृच्छत् किमिदं? मृदुला विहस्य प्रत्युवाच् श्रीमद्। इमानि विविधदेशेभ्यः विभिन्नस्थानेभ्यः समाहृत्यानितानि निम्बुकानि सन्ति। एवं सा एकं निम्बुफलस्य भागार्धं तस्मै प्रयच्छति। तं मुखे निधाय वर्कले जगाद् अम्लोऽयं। मृदुलावदत् इदं पीतवर्णकमास्वादय, इदमपि महदम्लं, श्रीमन् इदमन्यं स्वदतु वर्कले पुनरुवाच इदमपि अम्लम्।

मृदुलान्यमेकं कृष्णवर्णरञ्जितं यच्छति तं मुखे निधाय वर्कले सकोपम् वदति–इदमपि, अम्लं। को लाभः विविधदेशीयैः विविधैश्च निम्बुकफलैः, आस्वादं सर्वेषां तुल्यमेव अस्ति। वृथा प्रयत्नं कृतं, सत्यं वदन्ति जनाः अस्मद्देशे यद् भारतीयाः मूर्खाः भवन्ति।

मृदुला साट्टहासं हसति उच्चैः पृच्छति किं वर्णवैभिन्येना–स्वादवैभिन्यता जायते। भवान् तु अवगच्छति यत् स्थानभेदेन वर्णभेदेना–स्वादो परिवर्तते। वर्कले महाभाग! श्वानमिव विभिन्नपात्राणां लेहनम्मा–धेव्याधेरेव कारणं। भवतां देशे न संस्काराः न संस्कृतिः पशुवदाचरण–मस्ति। यथाविविधस्थानेभ्यः आनीतानां विभिन्नवर्णैश्च रंजितानां



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निम्बुकफलानाम् आस्वादमम्ल्मेव वर्तते। तथैव धरातले सकला वनितापि तुल्या सन्ति। तथा च यस्मिन् रजतपात्रे मया निम्बुकानि स्थापितानि तस्य वर्णमपि कृष्णं संजातम्। एवं चरित्रहीनस्य जनस्यापि एतादृशी गतिः संजायते। दैदीप्यमानं रजतपात्रं यथाम्लनिम्बुकैः कृष्णमभवत्तथैव चरित्रहीनस्य सङ्गस्तु दूरं, दर्शनमपि पापदायकम्।

इति वार्तां श्रुत्वा वर्कले मृदुलायाश्चरणयोः पतति। मृदुला पादेन ताडयति। गच्छ सत्वरं मा पुनः दर्शनं ददातु।

प्राचार्यः

आ०संस्कृतमहाविद्यालयः,

जांगला, हिमांचलप्रदेशः

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# जागृतमहिलासरपञ्चः

—डॉ० नन्दकिशोरगौतमोपाध्यायः 'निर्मलः'

स्वतन्त्रताप्राप्त्यानन्तरं राजस्थानराज्येऽपि शिक्षायाः प्रचारः शनैः शनैः परिवर्धमानोऽभूत्। न केवलं नगरेषु एव अपितु ग्रामे ग्रामे जनानाम् आकर्षणं शिक्षां प्रति संजातम्। पितृभ्याम् इदम् अनुभूतं यत् वस्तुतः शिक्षाज्ञानं ज्योतिर्वर्तते; यां विना मानवजीवनमन्धकारमयमस्ति, विद्यालंकृतो मनुष्य एव मानवपदवीं धारयितुमलं तां विना तु सः पशुरेव। तस्मादेव उक्तं गुणीजनैः 'विद्याविहीनः पशुः' इति।

शिक्षाप्रचारस्य प्रभूततरप्रभावेण ग्रामीणैरपि इदमनुभूतं यत् यादृशोऽधिकारोऽस्माकं बालकानां कृते शिक्षां प्राप्तुं वर्तते तादृशऽधिकारो बालिकानामपि वर्तते। काले काले जागृतसर्वकारैरपि बालिकानां कृते तथैव कन्यापाठशाला उच्चशिक्षालयाश्च प्रारब्धा यथा बालकानां कृते। शिक्षाबलमवाप्य महिला अपि स्वाधिकारान् प्रति जागृता अभूवन्।

खण्डारग्रामनिवासिनी अञ्जनाचौधरी अपि एतादृशी एव जागृत-महिला विद्यते। इयम् अञ्जना यदा सप्तमकक्षायां पठन्तीं आसीत् तदैव तस्या हृदये बालविवाहं प्रतिरोद्धुं दृढधारणा समुद्भूता। तया इदं निश्चितं यत् आगमनि जीवनकाले समायाते सा नूनमेव स्वाधिकारान् अवाप्य समाजस्यकलंकमिदं विदूरीकर्तुमवश्यमेव यतिष्यते।

काले समायाते तस्य पाणिग्रहणसंस्कारः तस्य ग्रामस्य प्रधान-पंचरामनाथस्य ज्येष्ठपुत्रेण रामलालेन सह संजातः। पञ्चविंशतिवर्षानन्तर सा सन्तानद्वयस्य जननी अभूत्। वर्षेऽस्मिन्नेव ग्रामपंचायतस्य निर्वाचन-घोषणा जाता। अञ्जनायाः प्रगतिशीलविचारान् वीथिकायाः सर्वा महिला जानन्ति स्म। अतः कूपोदकानयनकाले परस्परं दिनं दिनं चर्चां विधाय ताभिरिदं निर्धारितं यत् महिलासरपंचपद-निर्वाचनेऽस्मिन् तु जागृत-महिलया अञ्जनया एव संग्राह्यम्। एतदर्थे वयं सर्वाः संभूय प्रचारप्रसारे



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विधास्यामः। तासामुत्साहेन प्रचारप्रसाराभ्यां सद्भावनाभिः सुशिक्षित्वाच्च अञ्जना निर्वाचनार्थं प्रत्याशी एव नाभवत् अपि तु प्रभूततरमतैः तया ग्राममहिला सरपंचपदमवासम्।

प्रथमं तावत् सरपंचपदशपथसमारोहानन्तरम् अञ्जनया ग्रामस्य प्रमुखसमस्यानां निराकरणार्थम् ऐषीत् तथा सर्वप्रथमं जलसमस्या गृहीता। अस्याः कृते तया ग्रामस्य प्रमुखगोविन्दमन्दिरे सभा समायोजिता। ग्रामीणान् तान् सम्बोध्य सा उक्तवती यत् जलं विना जीवननिर्वाहो दुष्करो, भवेन्नाम अन्नं विना तु किञ्चित् कालपर्यन्तं जीवनं संधार्यते, किन्तु जलं विना तु दिनमेकमपि यापनं महद्दुष्करम्। इयम् अस्माकं निजीसमस्या तस्मात् अस्माभिरेव अस्याः समाधानं करणीयमस्ति। यथाशक्यं भवद्भिः श्रमदानेन, धनेन च साहाय्यं करणीयमेव। राज्य-सर्वकारस्यापि विषयेऽस्मिन् नूनं सहयोगो मिलिष्यति। अञ्जनायाः तत्परतया केवलं मासत्रय एव उच्चजलाशयस्य सुचारुव्यवस्था जाता तथास्याः सुचारुप्रबन्धेन ग्रामीणा अतीव सन्तुष्टाः अभवन्। एवमेव तया केवलं एकस्मिन्नेव वर्षे स्वच्छीकरणव्यवस्था, सन्मार्गव्यवस्था, चिकित्साव्यवस्था तथा महोत्सवानां व्यवस्थानामपि सुप्रबन्धः कारितः। इत्थं सरपञ्चस्य ख्यातिस्तु तथा केवलम् एकवर्षस्य कार्यैरेव संप्राप्ता, किन्तु बालविवाह कुप्रथावरोधनस्य भीषणसमस्या तस्याः समक्षं विकरालरूपेण समापतिता; यतो हि तस्या एव पितृव्यस्य द्वादशवर्ष-वयस्का दुर्गाकन्याया विवाहः तस्यैव ग्रामस्य हरिश्चन्द्रात्मजकमलेश-कुमारेण सह अक्षयतृतीयायाः पावनवेलायां भवितुं सुनिश्चितो यावद् हि तस्यावस्था केवलं पञ्चदशवर्षाणामेवासीत्।

परीक्षायाः परीक्षणकालेऽञ्जयानुभूतं यत् यं कलंकं समाजतरुच्छेतुं मया मम शिक्षणकाले दृढधारणा विहितासीत् तस्याः परीक्षणकालोऽयं समुपस्थितः। अहं चेत् इमं बालविवाहमवरोद्धुं समर्था न भवेयं तर्हि व्यर्था मम शिक्षा व्यर्थञ्च सरपंचपदमलंकरणम्। इति सञ्चिन्त्य तया



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पंचायतस्य सर्वेषां सदस्यानाम् एका विचारसंगोष्ठी समायोजिता। संगोष्ठ्यां विषयेऽस्मिन् सम्यक् विचारोऽभूत्। सर्वेषां सदस्यानां सर्वसमत्या मतमिदं संपारितं यत् अस्माभिः सर्वैः संमिल्य एकीभूय च पितृव्यभूरामलगेहं पञ्चायतस्य निर्णयोऽयं सम्प्रेषणीयो यत् इमं बाल-विवाहं न कुर्यात् अन्यथा सर्वकारस्य नियमानुसारं कार्यवाहीं कर्तुं पंचायत विवशो भविष्यति।

पंचायतस्य लिखितनिर्णयो यदा भूरामलेन संप्राप्तस्तदा स निर्णय-प्राप्त्यानन्तरमेव क्रोधविह्वलो जातः। ततः परं सः स्वाग्रजेन सह अन्यान् जनान् समादाय अपरेऽस्मिन् दिवसे पञ्चायतकार्यालयमुपागच्छत्। पूर्वसंकेतानुसारं तस्यागमनस्य सूचना सरपंचेन सह सर्वेषां सदस्यानां कृते प्रदत्ता। क्रमशः सर्वे सदस्यास्तत्र समागताः। तेषां समागता-नामनन्तरम् उपसरपंचपार्वत्या भूरामलं सम्बोध्य उक्तम्। बालविवाहोऽयं भवद्भिर्नकरणीयो; यतो हि भारतसर्वकारस्य नियमानुसारं बालिकाया विवाहावस्था अष्टादशवर्षवयस्का भवेत् बालकस्य च इयमवस्था एकविंशतिवर्षाणाञ्च भवेत्।

भवान् चेत् नियमानामुल्लङ्घनं विधाय इमं बाल-विवाहं करिष्यति तर्हि पंचायतकार्यालयमपि समुचितकार्यवाहीं कर्तुं विवशो भविष्यति।

उपसरपंचस्य वक्तव्यं श्रुत्वा भूरामल उवाच "इयम् अस्माकं पुत्री अस्माकं कृत एव शत्रुव्यवहारं चेत् कर्तुमिच्छति तर्हि नास्ति शोभनम्। अस्माभिस्तु यत् किञ्चित् निर्धारितं तत् अवश्यमेव भविष्यति; यतो हि अहं चेत् समाजे स्थातुमिच्छामि तर्हि अस्माकं समाजस्य परम्पराणां निर्वाहो नूनमेव निर्वाह्यो मया।" इति उक्त्वा क्रोधावेशेन समुत्थाय स्वजनैः सह यथागतस्तथैव परावृत्य स्वगृहमुपगतः।

महिलासरपंचेनापि तस्मिन्नेव काले मण्डलमुख्यालयं बाल-विवाहमिमं संरोद्धुं सूचना संप्रेषिता। अन्येद्यु मण्डलमुख्यालयात् आरक्षिदलेन सह उपनिरीक्षको भूरामलगेहम् आगत्य तमुक्तवान् "भो



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूरामल! मण्डलाध्यक्षस्य आज्ञानुसारं भवान् बालविवाहमिमं कर्तुं न शक्नोति। भवान् चेत् आज्ञामुल्लंघयिष्यति तर्हि राज्याज्ञानुसारम् आर्थिकदण्डेन सह कारावासोऽपि भवितुमर्हति।''

भूरामलः सशंकितो भूत्वा करबद्धेनोक्तवान् ''अस्तु श्रीमान्! राजाज्ञाशिरोधार्या वर्तते'' उपनिरीक्षको जगाद ''कथमस्माभिर्विश्वासः करणीयो यत् भवान् भविष्ये पुनः एतादृशीं त्रुटिं न करिष्यति। मम मते महिलासरपंचमहोदया पत्रं दद्यात् तर्हि श्रीमतामस्मात् अपराधात् मुक्तिर्भविष्यति।''

महिलासरपंचमहोदया तत्र समाहूता तया च तथैव मण्डलाध्यक्षाय यथा उपनिरीक्षकमहोदय वाञ्छति स्म, तया उपनिरीक्षकमहोदयस्य सम्मुखं पितृव्यभूरामलाय उक्तं यत् भारतसर्वकारस्य नियमानुसारं भवेन्नाम अनयो बालकबालिकयो विवाहो काले समागते भवेत्, किन्तु नाधुना।

—गीतगोविन्दकुञ्जम्,
एस–२४–२५ कृष्णमार्गः, शिवालयः (शिवाड़)
क्षेत्रम्, बापूनगरम्, जयपुरम्,
राजस्थानप्रदेशः–३०२०१५

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सहयोगः

—डॉ० राकेश शास्त्री

एकस्मिन् ग्रामे एकः दलितवर्गस्य चमकूः नामकः जनः निवसति स्म। तस्य रामकटोरी नाम्नी परिश्रमी सुशीला पत्नी चासीत्। तौ द्वावेव ग्रामवासिनां सेवां कृत्वा स्व जीवनं यापनं कुरुतः स्मः। स्वसमर्पितया सेवया द्वावेव ग्रामवासिनां हृदयं जितमासीत्। सर्वे तयोः सेवा-भावनायाः प्रशंसां कुर्वन्ति स्म। प्रातःकाले उत्थाय चमकूः सम्मार्जनीं गृहीत्वा ग्राममार्गान् परिमार्जनं कार्यं करोति स्म। तस्य पत्नी स्वगृहस्य सर्वाणि कार्याणि कृत्वा अन्येषां गृहेषु गत्वा परिमार्जनं कार्यं करोति स्म।

यतोहि तस्मिन् ग्रामे छूआछूतविषयिकी भावना लेशमात्रिकी अपि नासीत्। अनेन प्रकारेण चमकूः यदपि प्राप्यते ग्रामवासिभिः तेनैव तस्य परिवारस्य भरणपोषणं सम्यक् रूपेण भवति स्म। ग्रामवासिनां सेवया अतीव संतोषम् आवहतः तौ द्वावेव प्रसन्नौ स्तः।

तयोः एकः श्यामू नामकः पंच वर्षीयः पुत्रोऽप्यासीत्। अल्पवयसि खलु सः पितृभ्यां सह गत्वा तयोः सहाय्यं करोति स्म। एकदा तस्मिन् ग्रामे एकः सिद्धः साधुरागच्छत्। सर्वे ग्रामवासिनः तस्य साधोः समीपं गत्वा आशीर्वादं गृह्णन्ति स्म। चमकूरपि तस्य समीपम् अगच्छत्। यदा साधुः चमकोः पुत्रं श्यामूम् अपश्यत्, सः तं दूरतः आहूय अवदत्—"एष कस्य पुत्रोऽस्ति?"

चमकूः अंजलिं निबध्य साधोः समक्षं आगच्छत् अवदत् च—"भगवन्! एष मम पुत्रोऽस्ति आज्ञां ददातु।"

साधुरवदत्—"एषस्तु कोऽपि पुण्यात्मा अतीव भाग्यशाली वर्तते। तव सर्वान् कष्टान् अभावान् वा दूरीकृत्य अस्य ग्रामस्य तव नाम्नः च प्रसिद्धिं करिष्यति। मम वचनं कदापि मिथ्या न भविष्यति।"

साधोः वचनं श्रुत्वा सर्वे ग्रामवासिनः अतीव विस्मयान्विता



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभवन्। तेषु एकः जनः उत्थाय अवदत्—"भगवन्! एष कथं भाग्यशाली? अस्य ग्रामस्य नाम कथं करिष्यति? इति विस्तरेण कथयतु, वयं भवतः रहस्यमयीं वाणीम् अवगन्तुमं न शक्नुमः।"

साधुरवदत्—"श्रूयताम् एष खलु भविष्यकाले यत्र कुत्रापि उच्चपदं गृहीत्वा अस्य ग्रामस्य स्व पित्रोः नाम उज्ज्वलं करिष्यति। भवद्भिरस्य रक्षा करणीया।"

इत्युक्त्वा साधुः तु अग्रिमे दिवसे तस्माद् ग्रामाद् अगच्छत्। ग्रामस्य सर्वे जनाः श्यामूम् अतीव स्नेह–दृष्ट्या अपश्यन्। एकदा तस्य ग्रामस्य मुख्यः जनः अवदत् ग्रामवासिनं प्रति—

भो! श्रूयतां एष चमकूः अस्य पत्नी च ग्रामस्य सर्वेषां जनानां तन्मयभावेन सेवां कुरुतः। पुत्रश्चास्य श्यामू अस्माकं ग्रामस्य "नाम" करिष्यति। अतः अस्माभिः अस्य रक्षा करणीया, इति साधुनापि उक्तं प्राक् भवतां सर्वेषां समक्षम्। अतः अस्माभिः सर्वैः मिलित्वा एनं विद्यालयं प्रेषितव्यम्। तदैव शिक्षितो भूत्वा एष कोऽपि श्रेष्ठः पुरुषः किं वा उच्चपदस्थो भविष्यति। शिक्षाभावे तु किमपि न कर्तुं शक्नोति कोऽपि।

ग्राम–मुख्यस्य वचनं श्रुत्वा सर्वे ग्रामवासिनः प्रसन्नाः संजाताः। अतः ते सर्वे मिलित्वा श्यामूम् विद्यालयं प्रेषितवन्तः। श्यामूरपि विद्यालयं गत्वा अतीव परिश्रमेण अपठत्। शीघ्रतया च स्वतीक्ष्णप्रतिभया कक्षे द्वे एकस्मिन् वर्षे उत्तीर्णे कृते। सर्वे ग्रामवासिनः प्रसन्नाऽऽसन्, यतोहि श्यामू सर्वेषां ग्रामवासिनां निकषोपरि श्रेष्ठः खलु सिद्धः संजातः।

यतोहि तेन श्यामूना ग्रामस्य विद्यालयस्य सर्वाः परीक्षाः प्रथम्यां श्रेण्यां उत्तीर्णाः कृताः। दशमकक्षायां तु तेन बोर्ड–परीक्षायां सम्पूर्णे राज्ये प्रथम स्थानं लब्धम्। अनेके पत्रकाराः दूरदर्शन–कार्यकर्तारोऽपि च ग्रामं तत्र आगतवन्तः। सर्वत्र अस्य ग्रामस्य प्रशंसा भवति स्म। अस्य ग्रामस्य सर्वे जनाः प्रसन्नाः भूत्वा श्यामोः तीक्ष्णबुद्धेः तस्य च



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विनम्रतायाः सदैव प्रशंसां कुर्वन्ति स्म। तस्य पिता चमकूरपि अतीव सौभाग्यशाली च स्वां मन्यते स्म, अधुना तु सोऽतीव तन्मयभावेन ग्रामवासिनां सेवां क़रोति स्म।

ग्रामे खलु दशम कक्षा पर्यन्तं विद्यालयम् आसीत्। अतः अधुना ग्राममुख्येन निश्चयः कृतः यत् श्यामूम् उच्चशिक्षार्थं नगरं प्रेषितव्यम्। तस्य मतेन सह ग्रामवासिभिः स्व सम्मतिरपि प्रदत्ता सर्वैः मिलित्वा किंचिद् धनम् एकत्रीकृतम्। श्यामूम् च दत्वा ग्राममुख्योऽवदत्—

"पुत्र! श्यामू, अधुना त्वं नैव केवलं चमकोः पुत्रोऽसि, अपितु अस्य सम्पूर्णस्य ग्रामस्य पुत्रः, अतः नगरं गत्वा त्वया मनोयोगपूर्वकम् उच्चशिक्षा प्राप्नीया। अस्य ग्रामस्य सर्वेषाम् आशा त्वां प्रति दृढ़तया निबद्धा।"

ग्राममुख्यस्य वचनं श्रुत्वा श्यामूः नेत्रेऽश्रूपूर्णे संभूते। सोऽवदत् तस्य ग्राममुख्यस्य चरणस्पर्शं कृत्वा—"यदपि भवतां सर्वेषां प्रेम मया प्राप्तम्, यश्च विश्वासः भवद्भिः सर्वैः कृतम्, मां प्रति, अहं तस्य निश्चयमेव रक्षां करिष्यामि, एषस्तु मम दृढ़ निश्चयः," इत्युक्त्वा श्यामू उच्चशिक्षां प्राप्त्यर्थं नगरं गतवान्।

नगरे तेन एकस्मिन्नावासीये विद्यालये एकादश–कक्षायां प्रवेशः प्राप्तः। तस्मिन् विद्यालयेऽपि सः स्वप्रतिभया सद्–विनम्रव्यवहारेण च सर्वेषां मनः जितम्। तत्रापि तस्य व्यवहारस्य सर्वेऽध्यापकाः प्रसंशां कुर्वन्ति स्म। ग्रामादपि अनेकशः ग्राममुख्यः तत्रागच्छति स्वग्रामपुत्रं श्यामूं च दृष्ट्वा प्रसन्नो भवति स्म। ग्रामं च गत्वा सः सर्वेषां ग्रामवासिनां श्यामोः विषये कथयति तां प्रशंसां श्रुत्वा सर्वे प्रसन्नाः भवन्ति स्म। विद्यालयेऽस्मिन् तस्य नाम श्यामलालोऽभवत्।

एवं अध्ययनं कृते सत्यपि श्यामलालोऽन्येषां छात्राणां बहुशः सहायतामपि करोति स्म अनेकैः प्रकारैः। छात्रावासस्य अधीक्षकोऽपि श्यामलालस्य वैशिष्ट्यम् अभिलक्ष्य अतीव प्रसन्नोऽऽसीत् तं च पुत्रवत्



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्नेहं करोति स्म। अनेन प्रकारेण अध्ययने कृते सः द्वादश-कक्षायाः बोर्ड-परीक्षायामपि प्रथमो स्थानो लब्धवान् वरीयता सूची मध्ये। अवसरेऽस्मिन् तस्य सम्माने ग्रामवासिभिः सम्मान-समारोहोऽऽ-योजितः। श्यामलालः तस्य पितरौ च अतीव प्रसन्नताम् अनुभवन्ति स्म, तं च साधुं मनसा धन्यवादान् वितरन्ति स्म, येन एतादृशीं भविष्यवाणीं कृत्वा श्यामूः विषये तं ग्रामवासिनां दृष्टौ प्रशंसनीयः कारितः। श्यामलालोऽपि सर्वेषां ग्रामवासिनां समक्षे नतशिरो भूत्वा कृतज्ञता प्रदर्शिता।

अनन्तरं श्यामलालः स्नातक-कक्षायां समाजशास्त्रविषयं गृहीतवान् मुख्यरूपेण यतोहि सः समाजस्य सहयोगेनैव सर्वं लब्धवान् इदानीं यावत्। स्व अध्ययनकाले तेन अनेकशः समाजस्य समस्यानां विषये बहवः लेखानपि लिखिता आसन् समाचारपत्रेषु। तस्य लेखानां प्रशंसा गुरुभिरपि क्रियते स्म। एकदा छात्रावासे सः किंचिद् रुग्णो जातः। एतां सूचनां लब्ध्वा ग्रामप्रमुखः धावन्नायातः छात्रावास-मध्ये तस्य च पुत्र इव शुश्रूषा कृता। सर्वे च विद्यालयस्य छात्राध्यापकाः अतीव चिन्तितान्विताः संजाताः, अनन्तरं स्वस्थे जाते च तस्य सर्वे हर्षिताः अभवन्।

अनेन प्रकारेण श्यामलालेन स्नातकोत्तरोपाधिः समाजशास्त्र-विषयं मुख्यरूपेण गृहीत्वा प्रथम्यां श्रेण्यां विश्वविद्यालये वरीयतासूचीमध्ये प्रथमं स्थानं लब्ध्वा प्राप्ता। अनेन च एकस्मिन् महाविद्यालये सः समाजशास्त्रविषये व्याख्याता पदमपि प्राप्तवान्। सर्वे प्रसन्नाऽऽसन् यदस्य ग्रामस्य पुत्रः महाविद्यालये प्रथमं बारं व्याख्याता संजातः।

यदापि श्यामलालः ग्रामं गच्छति स्म तदा सो ग्रामवासिनां कृते बहूनि वस्तूनि नगराद् गृहीत्वा नयति स्म। सर्वे ग्रामवासिनः तस्य श्यामलालस्य अतीव आदरं कुर्वन्ति स्म। सोऽपि सर्वेषां जनानां विकटपरिस्थितावपि सहाय्यं करोति मनोयोगेन। अनेन बहु दिनानि



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



व्यतीतानि आसन्। श्यामलालः स्वमहाविद्यालये मनोयोगेन विद्यार्थिनं अध्यापयति स्म। सर्वे छात्राः तस्य सम्मानं कुर्वन्ति स्म, तस्य च वैदुष्येनातीव प्रभावित आसन्।

समाजेऽपि तस्य श्यामलालस्य अत्यादरोऽऽसीत्। अस्मिन् मध्ये श्यामलालेन दलितवर्गस्य महतीं समस्यामभिलक्ष्य पी-एच०डी० उपाधिरपि गृहीता। अधुना सः श्यामलालतः डॉ० श्यामलालः संजातः। ग्रामवासिनां कृतेऽवसरोऽयमतीव प्रसन्नतायारासीत्। सर्वैः महा-विद्यालयव्याख्यातृभिरस्मिन्नवसरे महाविद्यालये ग्रामे च ग्रामवासिभिः महोत्सवः आयोजितः।

एवं कृते सति बहु दिनानि व्यतीतानि अस्मिन् काले डॉ० श्याम-लालस्य निर्देशने अनेके छात्रा अध्यापकाश्च पी-एच०डी० उपाधिमपि लब्धवन्तः, बहूनि च पुस्तकानि लिखितानि तेन। तस्य लिखितानां पुस्तकानां प्रशंसा विद्वद्भिरपि कृता अनेकेषु अवसरेषु। अनेन प्रकारेण डॉ० श्यामलालस्य तस्य ग्रामस्य च प्रसिद्धिः चतुर्दिक् प्रसरिता। तस्य प्रसिद्धिं च श्रुत्वा एकस्मिन् दिवसे तस्य समीपे एकस्य विश्वविद्यालयस्य ''कुलपति'' पदस्य गरिमामयं नियुक्तिपत्रं प्रेषितं महामहिम राज्यपाल महोदयेन। सर्वे जनाः प्रफुल्लिताः आसन्, डॉ० श्यामलालस्य एतादृशीम् उन्नतिम् अवलोक्य। तस्य साधोश्च भविष्यवाणी पूर्णतया सत्या संजाता।

अस्मिन् समयेऽपि डॉ० श्यामलालः सदैव स्वोन्नति-विषये स्व ग्रामवासिनाम् अभूतपूर्वस्य योगदानस्य प्रशंसां करोति स्म, तस्य च कथने सति तस्य नेत्रेऽश्रूपूर्णे भवतः स्म। एकदा एकस्मिन् समाचारपत्रे डॉ० श्यामलालस्य साक्षात्कारः प्रकाशितः, तस्मिन् तं प्रति एकेन पत्रकारेण अनेकाः प्रश्नाः कृताः आसन् यथा—''डॉ० महोदयः! दलितपरिवारे उत्पन्नोऽपि अद्य यं उत्कृष्टं स्थानं लब्धवान् भवान्, अस्य गरिमापूर्णस्य स्थानस्य कृते कं श्रेयो दास्यति भवान्?''

डॉ० श्यामलालोऽवदत्—''अस्य कृते सर्वप्रथमम् अहं स्व पितरौ



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


धन्यवादान् वितरामि यैः मां जन्म प्रदत्तम्, अनन्तरं स्व ग्रामवासिनां सर्वेषां सम्पूर्णो श्रेयो दास्यामि येषां सहयोगेनाहम् एतत् गरिमापूर्णं पदं लब्धवान् अस्मि। सहैव तं महापुरुषं भविष्यवक्तारं साधुमपि बहु साधुवादान् प्रददामि, येन एतादृशीं भविष्यवाणीं कृत्वा सर्वेषां ग्रामवासिनां मम प्रति सहयोगस्य भावना उत्पादिता।"

पत्रकारः उवाच—"अवसरेऽस्मिन् भवान्नस्माकं पाठकान् कः संदेशः दातुं वांछति?"

डॉ० श्यामलालोऽकथयत्—"अवसरेऽस्मिन्नहं एतदेव वक्तुं वांछामि पाठकान् यत्—जनः कुत्रापि कस्मिन्नपि कुले उत्पन्नो भवेत्, यदि स जनः समाजस्य सहयोगं प्राप्येदार्थिकरूपेण प्रेरणारूपेण प्रेमरूपेण ममत्वरूपेण वा, तर्हि निश्चयमेव सः उन्नतिं प्राप्नुयात्। अतः समाजस्यार्थिकरूपेण समर्थकैः जनैरन्येषामसमर्थानां सहयोगोऽवश्यमेव करणीयः।"

पत्रकारोऽवदत्—"येन समाजेन भवद्भिरेतादृशोऽद्भुतः सहयोगः कृतः, तदर्थं भवान् किं कर्तुं वांछति स्व जीवने?"

डॉ० श्यामलालेन कथितम्—"मया स्व ग्रामे एकस्य महाविद्यालयस्य स्थापनायाः दृढ़-निश्चयः कृतः। यो मां प्रति ग्रामवासिनाम् अद्भुतं "सहयोगं" सदैव स्मारयिष्यति, इति।

डॉ० श्यामलालस्य अस्य कथनस्य तस्य विनम्रतायाश्च तत्रोपस्थितैः सर्वैः जनैः करतलध्वनिना मुक्तकण्ठेन च प्रशंसा कृता।

—अध्यक्षः, संस्कृत-विभागः
श्रीगोविन्द गुरु राजकीय स्नातकोत्तर महाविद्यालयः
बांसवाड़ा (राज०)

—:: ०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# कर्मणा स्वयमेव भाग्यविधाता

—डॉ० शिवप्रसादः त्रिपाठी ( राजवैद्यः )

ग्रामस्यैकस्यां रथ्यायां क्रीडन्तं जीर्णशीर्णवस्त्रावेष्टितं दीनहीन-बालकं दृष्ट्वा देवेशरचिन्तयत् गम्भीरतया। सार्धमेवस्वपितुः परम-भाग्योपजीविनः दशां विचार्य न लब्धवान् निद्रा रात्रौ। दिवसेऽन्ये विद्यालयें पृच्छति शिक्षकं प्रति भो गुरुवर! संसारेऽस्मिन् कोऽपि धनिकः निर्धनी वा बहवः धनधान्यादिभिः सुखिनः दीनहीनाश्चापरे केचित् रोगिणः दृश्यन्ते। कस्मात् कारणात् दैवादथवा कारणमन्यदपि।

गुरुणा कथितम्—सुष्ठुतरं प्रश्नं तव। दैवं किं इतिप्रच्छन्नम्। परन्तु पौरुषं पुरुषाधीनम्। अतः दैवं निहत्य पौरुषमात्मशक्त्या विधाय स्वात्मावलम्बिनः एव पुरुषः समाजराष्ट्रयोः कर्णधाराः प्रभूयन्ते, ते एव स्वयमेव भाग्यविधातारः। येसालसाः परोपजीविनः दैवाधीन-स्वभावाः नियमसंयमरहिताः कपटाचारिणः ते एव धनहीनाः रोगिणश्च।

उक्तं च— षड्दोषा पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भय क्रोधमालस्यं दीर्घ सूत्रता॥

अन्यच्च— उत्साह सम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढ़सौहृदञ्च लक्ष्मी स्वयं याति निवासहेतुम्॥

तथा ये पुरुषाः मित्र वञ्चका नित्ययाचिनः नैष्ठुर्यस्वभावाः परनिन्दकाः कृतघ्नाश्च स्वयमेव निज दुर्दशायारुत्तरदायिनः व्रीडयन्ति कुलं समाजं राष्ट्रञ्च। सुश्राव गुरुवाक्यान् सुषुमाभगिन्या सह देवेशः तन्मयतया। विचचार, निर्दोषत्वं भवितुं शक्नोमि तथा स्वावलम्बी भवितुं सतत प्रयासशीलः भूयाम्।

कानपुर नगरात् नेदीयसि एव रघुदासपुरं सुरम्यं ग्रामम्। तस्मिन् सीमितपरिवारः यदुनाथ नामकक्रीतदास इव सम्पन्न रामसिंह-गृहे सेवयन् प्रतिवसति स्म। यदुनाथः सत्यनिष्ठः परिश्रमी एवं सहृदयव्यक्तिरासीत्।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तेन निजजीवनचर्यानुरूपमेव पुत्र देवेशं पुत्री सुषुमांच निर्मातुं प्रयासं कृतम् वाञ्छास्ति भवितुं शक्नोति मम सन्ततिः श्रेष्ठतमा।

ब्राह्मेमुहूर्ते एव सपरिवारः निद्रां परित्यज्य नित्यकर्मभ्यः निवृत्य परमेश्वरमाराध्य यथातथा प्रातराशं स्वीकृत्य सात्विकी यदुनाथः स्व कर्तव्ये सतर्कः परोपकारिचेतसा दीनहीनानां साहाय्य भावनया सेवते स्वामिनम्। सुषुमा देवेशयोः स्वयमेव पितुर्गुणारापतिताः राष्ट्रसमाज-हितभावना संश्लिष्टाद्वयोः मनसि।

विद्यालयादागच्छन्नेकदा रेलवेलाइनमार्गं भग्नमित्यमवलोक्य सम्मुखे एवायान्तरेलयानमवश्यमेव पतिष्यति परिणामतः सहस्रं परिजनाः दुर्घटनाग्रस्ताः भूयाः। तां विभिषिकां विचिन्त्य चालकं कथं सूचनाभवेत्। स्मृते रक्तध्वजं दर्शयित्वेव गार्ड कर्मचारिणा रेलयानं स्थिरीकृतमेकदा, परन्तु कुत्रमिलिष्यति रक्तध्वजं रक्तवस्त्रं वा। इतस्ततः पश्यति, अदूरमेव दक्षिणेतर भागे लघुमन्दिरेध्वजा संलग्नादृष्टा। झटितिध्वजमानीय रेलयानमार्गसमीपे एव धावन् पौनः पुन्यं दर्शयति चालकम्। चालकेन रक्तध्वजं प्रदर्शयन् बाल्यभावखेलं विचार्य सन्देहात्मकभावतः मन्दगतिः कृता रेलयानस्य। परन्तु देवेशः पूर्णपौरुषेण रक्तधजं प्रदर्शयन् चीत्करोति। अग्रे रेलमार्गं भग्नं भग्नं भग्नम्। चालकेन चीतकारं श्रुत्वायानं तदा स्थिरीकृतम् यदा भंग्नमार्गमतिसन्निकटम्। धावन्नाघाताद् पतितदेवेशः संज्ञाशून्यः। कर्मचारिणरवतीर्य गम्भीरमार्ग भग्नमालोक्य प्रसंश बालकस्य बुद्धिसाहसयोः। देवेशं चिकित्सालये प्रेष्य भूरि-भूरि प्रशंसया आगतपितृभ्यां धन्यवादाः वितरन्तः पुरस्कृतौपितरौ। समाचारपत्रेऽपि प्रकाशितं शिक्षाप्रदं समाचारम्। यत् देवेशोत्साहपौरुषत्वात् सहस्राणां जीवनं रक्षितम्।

देवेशस्य माताऽपि पत्युरनुकूला दाक्षिण्य स्वभावा। पित्रोः प्रभावात् पुत्री सुषुमापि सहृदयोत्साह सम्पन्ना। सन्तत्योः गुणाननुभूयपितुर्यदुनाथस्य महती प्रसन्नता सञ्जाता चेतसि।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एकदा कार्यवशात्विपणेः प्रत्यागच्छन्त्या सुषुमया एकः बालकः रेलयानमार्गमुल्लंघनशीलः दृष्टः तथा समुखादागच्छन्तीं तीव्रगत्या रेलपथगामिनीमवलोक्य बालकः जीवनरक्षार्थं तीव्रगत्या उत्थापितः क्षणानन्तरमेव घड़ घड़ शब्दायमाना निर्गता। समीपमेवस्थित पितरौ स्वबालजीवनरक्षिकोत्साहकौशलं घटनाचक्रञ्चावलोक्य हतप्रभौ सहर्षौ सुषुमागृहेगत्वा यदुनाथं प्रत्याभारं प्रदर्शयतः स्म। धन्या सुषुमा ते पितरौच धन्यौ।

उच्चशिक्षा दातुमसमर्थः पिता इति विचार्य देवेशः कर्णपुरेशिक्षया सह धनोपार्जनार्थमौषधिनिर्माणशालायां रात्रौ घण्टात्रयपर्यन्तं कृतकार्य-प्राप्तधनेन भगिन्या सुषुमया सह शिक्षां प्राप्नुवन्नासीत्। एकदा औषधि कम्पनीतः प्रत्यागच्छन्तं देवेशं तुलाराम नामको वञ्चकः मित्रताप्रभावात्, द्यूतमदिरावेश्याचौरकार्यसंल्लग्नपुरुषैः सह सम्मेलयत् परन्तु संस्कारित-देवेशः स्वलक्ष्यान्नविचलितः उदरपीडा व्याजेनापससार।

तस्य सत्यनिष्ठां दृष्ट्वा कम्पनी स्वामिना सुरेशेण महत्त्वपूर्णकार्यं समर्प्य पुत्रवत् सम्मानितः श्रम्मूल्योऽपि वर्द्धितः।

शिक्षकप्रदत्तशिक्षां संस्मृत्य लघुगृहे निवसतः सन्निकटपरीक्षा-कालमवगत्य ब्राह्ममुहूर्तत्रेव सुषुमयासह प्रसन्नचेतसः शिक्षाध्ययनशीलः स्नातक परीक्षां सर्वप्रथमश्रेण्यामुत्तीरयति सुषुमयाऽपि भ्रातरमनुसरन्त्या प्रथम श्रेण्यामुत्तीर्णा स्नातकपरीक्षा।

एकया प्रतिवेशि महिलया वासना दृष्ट्याविलोकितोऽपि ब्रह्मचर्य-मरक्षयत् देवेशः। एकदिवसे कम्पिनी स्वामिनः पुत्र सुरेशमपहर्तु-मागतैर्दस्युभिः संयोगवशात् धनाशया देवेशरपहृतः। सघन कानने स्व भवनेष्वेकान्ते सुरक्षितः देवेशः दस्युभिः।

कम्पनी स्वामिना प्रिय देवेशस्य मुक्ति हेतु पुलिस साहाय्येन प्रयत्नशीलः दरीदृश्यते।

निगडितेनदेवेशेन स्मृतं दोहा रहीमस्य

वन औ व्याधि विपत्ति में रहिमन मरिअ न रोय।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**जो रक्षक जननी जठर सो प्रभु गयो न सोय।**

**वने व्याधौ विपत्तौ च मृत्योर्मा शरणं व्रज॥**

**सुरक्षत्युदरे मातुः सप्रभुः नास्वपत् खलु॥**

इति प्रेरितः सधैर्यः बहिःनिःसर्तुमुपायमचिन्तयत्। तदैव कर्णयोरापतिता काचित् वार्ता सतर्कतयाऽश्रुणोच्च। एकेन दस्युना कथितमपरं मन्दस्वैः त्रिसंख्याकितं यानं (कार) यत्रतत्र भग्नं सुधरी करणार्थं (मरम्मत) नेतव्यं श्वः नगरं प्रति। इतिश्रुत्वा मनसि योजनां निश्चित्य-देवेशेन प्राप्त भोजनं कृतं। द्वारे वहिः सयोगादागतदस्युपुत्रीमवलोक्य। गवाक्षतः भणितं देवेशेन, भो भगिनि! अस्वस्थोऽहम् वाटिकायां भ्रमणार्थमुदघाटय द्वारम्। गम्भीरमधुरवाक्यसन्तुष्टया तयाऽनावृतं द्वारं कृतम्। धैर्यमवलम्ब्य निःसृत्य वाटिकास्थितसंकेतितयानस्य पृष्ठ निर्मितमजूषायां (डग्गी) निलीनः देवेशः।

प्रातरेवानिरीक्षितयानं द्वितीययानेन सह संयोज्य नगरं गत्वा चालकः कार्यशालायां सुधरीकरण कार्यमुक्त्वा अन्यत्र तः कार्यं सम्पादनाय। यदैव कर्मकारेणोदघाटितमजूषायां मध्ये पुरुषः चाकचक्यः भीतः करबद्धदृष्टः देवेशः, सः निःसृत्य कथित पूर्व वृतान्तं निवेदयति। श्रुत्वा विदितपूर्ववृतान्तदयाशीलकर्मकारेण गम्भीरसमस्यां परिज्ञाय स्वयानेन कम्पनीं प्रेषितः। देवेशमागतं दृष्ट्वा कम्पनी स्वामिना प्रसन्न-गौरीशंकरेण पुलिसविभागं संसूच्य गुप्त स्थाने संरक्षितः देवेशः। देवेशस्यापहरणमागमनं चाकर्ण्यागतौपितरौ रघुदासपुरग्रामात्।

देवेशापहरणत्वात् दुःखितसुषुमामेकाकिनीमत्वा दुष्टप्रतिवेशी रात्रौ प्रविश्य दुष्कर्मेच्छया यदैव सुषुमां प्रतिधावति तदैव धैर्य-साहसचातुर्येण कक्षे प्रविश्य द्वितीयकक्षगवाक्षात् निःसृत्यपुनरंगणे आगत्य कपाटावरुद्धौ सुषुमया। अनुगम्यमानः दुष्टावरुद्धः पश्चात् तस्याः चीत्काराकृष्टैः प्रतिवेशिभिः बद्धः ताडितः पुलिस विभागं समर्पितश्च। तस्याः धैर्यसाहसादिभिः प्रसन्नपुलिसाधीक्षकेण सा पुरस्कृता। कम्पनी स्वामिना



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तादृशीं दुर्घटनां श्रुत्वा स्व कार्यालयस्यन्तिके कक्षे निवासंदत्तम सुषुमाम्।

सुषुमया देवेशेन च प्रशासनिक परीक्षामुतीर्य क्रमशः पुलिसाधीक्षक पदं तथा उपजिलाधिकारिपदम् समलंकृतौ।

प्रशिक्षणं कालान्तरं सेवाभावनया पितरौ सादरं समानीय स्वस्थाने एव द्वयोः भोजनवस्त्रनिवाससेवकादि सम्पूर्णव्यवस्था कृता देवेशेन। पितुः शिक्षावचनानि संस्मृत्य "नैतिकताया मूलं वृक्षं फलमित्थम्" (१) सुपरिणामैव कार्यस्योत्तमता (मूलं) (२) सत्यादसत्यावरणं दूरी करणमेवन्यायः (वृक्षः) (३) दीनहीनानां कष्टानपहरणमेव प्रशासनस्योत्मता (फलम्)।

तस्य न्यायालये एकाभियोगं योजितम् एकमात्रपुत्रवत्या विधवया यत्ममदशवीघाप्रमाणं अन्याधिकृत क्षेत्रं दापयितुं दयां कुर्यात्। विपक्षः स्ववैयक्तिकधनादिकप्रभावं प्रदर्शयितुं फलमेवादिप्रचुरमात्रया प्रेषितमुपजिलाधिकारिमहोदयस्य निवासे। द्वितीय दिवसे पूर्वाह्ले एव विपक्षस्यागते देवेशेनोक्तम् कथमागतोऽसि किं फलमेवादिकवस्तूनिश्रीमद्भिः प्रेषितानि शीघ्रमेव नेतव्यम् पश्चादेव श्रोस्यामि भवत्प्रार्थनां तथैवकृते देवेशं वदति विपक्षी—

महोदय! ममाधिकृतक्षेत्रं मह्यमेवदेयं नतु समाजे उपहास्यतां प्राप्स्यामि।

देवेशेन प्रष्टः—वदकस्य क्षेत्रं वास्तविकरूपेण।

विपक्षी—वृद्धविधवायारेव, परन्तु चिरकालात् ममाधिकारे।

देवेशः—तवसमीपेकियत्प्रमाणक्षेत्रम्।

विपक्षी—शतवीघा प्रमाणम्।

देवेशेनोक्तम्—इत्यधिक प्रमाणक्षेत्रेभ्यः नास्ति सन्तुष्टिः श्रीमताम् परपीडनमेव स्वभावः भवतः। तेनभणितम् सेवां करिष्यामि।

देवेशः—कियत्प्रमाणं।

विपक्षी—पंचसहस्त्ररूप्यकाभिः।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



देवेशः—अन्यदपि।

विपक्षी—सप्तसहस्रेभ्यः

देवेशः—किंचिदपरमपि।

विपक्षी—दशसहस्ररूप्यकाभिः।

देवेशः—(तीव्रस्वरेण) दशलक्ष रूप्यकैरपि क्षेत्रमिदं तवनास्ति। साविधवा एव स्वामिनी यतोहि भवतैवोक्तं क्षेत्रं विधवायाः। अग्रिमदिवसे एव विधवापक्षेनिर्णीय ताभ्यरधिकारमपि प्रदापयत्। इति नैतिकता विख्याता सर्वत्र।

एकदा प्रार्थनापत्रमेकं प्राप्तमितिकन्ट्रोलविधिना प्राप्तव्यशर्करा-मिट्टीतैलं च नवितरितं षणमासात्कोटाधारकेण। पठित्वा देवेशेन विचारितम्। ग्रामेषु रात्रौ विद्युत व्यवस्था नास्ति सुष्ठुतमा। मिट्टीतैलमेव प्रकाश साधनमात्रं यदि प्रकाशे भोजनव्यवस्थापि भवितुं न शक्नोति। शर्करामिश्रित दुग्धमपिवत्सान् पाययितुं न समर्थाः ग्राम्यजनाः तत्तु राजकीय व्यवस्थाऽर्थहीना। सपदि एव जीपयानेन तत्ग्रामं गत्वा दशकार्डपत्राणिसंचीय पंजिकासहितं कोटाधारकं ग्रामप्रधानं चाहूय विलोकित-पंजिकायां सहस्ताक्षरतैलशर्करामात्रा सहिताकितं परन्तु-कार्डपत्रे नांकितम् जालं स्पष्टमिति परिज्ञाय कष्टानुभूय तस्यकोटां समाप्य नवीनकोटा धारकंनियुज्य प्रधानरादिष्टः तेनयत् राशनसामग्रीं प्राप्य प्रतिमासे घोषणां कृत्वैव वितरेत् सत्यतया। ग्रामवासिनः प्रसनतरारभवन् सुव्यवस्थाभिः।

एवं कष्टित जनानां साहय्यं विधाय प्रशासन वर्गेषु श्रेष्ठतमः पदवीं प्राप्य पारिवारिक सुखशान्तिमुपभुज्य जिलाधिकारिपदवीं शीघ्रमेव लब्धवान्।

सु संस्कारिता सुषुमा पुलिसअधीक्षकपदवीं प्राप्यस्वकर्तव्येषु विहंगंम दृष्टिं प्राक्षिपत् तयालोचितं समाजेनिरपराधानां शोषणं ताडनं दुष्टैः सहसंबन्धं विधाय धनार्जनयितुं सल्लग्नाः कर्मचारिणः बल-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शालिनश्च। इति निश्चित्य दुखिनां दुःखहरणमेव पदस्य गरिमा।

प्रतिदिवसं पीड़ितजनानां पीडां संश्रुत्य निराकरणं तस्याः दिन-चर्याऽभूत्। एकदा निर्धनदम्पतिः प्रविश्य कक्षेकरवद्धः प्रार्थयति। महोदये! ममनाम्ना कपटेन बैंकसंस्थातः ऋणंनिष्कासितं दिवाकर नामकेन। ऋणं प्रासुं आवां प्रताडितौ कर्मचारिभिः। यदा सत्यं प्रकटितं तदैवमम गृहे प्रविश्यदिवाकरेण प्रताडितौ तथा मम बालकौ विद्यालय गच्छन्तौ पीड़ितौ तेन। ऋणं दिवाकरेण गृहीतं मांदण्डयते। स्थानीय थानाध्यक्षेण ममप्रथमसूचनापि न लिखिता तर्जितौ च। इत्यन्यायं सम्परीक्ष्यधूर्तजालकं दिवाकरं बन्दीकृत्वा अभियोगं पर्यचालयत् इत्थं दम्पत्योः कष्टं न्यवारयत्।

पितुः पत्रमागतं यत् गयाश्राद्धयज्ञेयुवयोरुपस्थितिरावश्यकी। अतः प्राप्तावकाशे द्वौट्रेनयानेन अंगरक्षकाभ्यां सह ग्रामं चलितौ। स्वशयिक-यादेवेशेनदृष्टः—उपरिशायिकास्थ पुरुषः भूयःभूयः स्वपेटिकां स्पृशति पश्यति च।

यदा शौचार्थं स गतवान्। देवेशेन पेटिकामुत्थाप्योत्तोलयत् अतिभार-युक्तामनुभूय सशंकदेवेशेन सेल्युलर दूरभाषेण सूचितं रेलवे पुलिसदलम्, सदलपुलिसाधिकारिणा पेटिकार्यावैदेशिशस्त्राणि विदेशिप्रचुरमुद्रामव-लोक्य बन्दीकृतेन संकेतितातंकवादिनः चत्वारस्न्ये दस्यवः विस्फोटक सामग्री सहिताः धृताः, पलायिताश्च परन्तु पुलिसगुलिकाभिः मृतौ बन्दीकृतश्चापरः एकः पलायितुं समर्थः।

देवेशेन प्रशसंस विज्ञानं यत्सेल्युलर फोनयन्त्रेण सूचना प्रेषणे-समर्थोभवम् वैज्ञानिकानां विज्ञानस्य देशेमहती आवश्यकता।

स्वस्टेशनप्राप्ते सुषुमया सह कारयानेन ग्रामं प्रति गच्छतः देवेशेन बाल्यकाल संस्मरणान् स्व पितुश्चावस्थां ध्यायता टैक्सीयानेनावरुद्धं मार्गं विलोकितं सहसा।

दुर्घटनां विचिन्त्य यदैव यानं (कार) स्थिरं कृतं तदैव पूर्वमेव रेलयांनतः पलायितदस्योः दुष्कृत्यं विचार्य सुषुमया संकेतं दत्वा



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पलायनस्य नाटकं कृतम्। सुषुमामनुसरनदस्युः देवेशस्य गुलिकया मृतः अंगरक्षकौ निद्रावशीभूतौ यावत् सतर्कतयाऽवतरतः तावदपरनिलीन-दस्युना देवेशः धृतः परन्तु सिहिकामिवुत्प्लुत्य सुषुमया स्वगुलिकया समाप्तः दस्युः। निकटस्थ पुलिसस्टेशनं तौशवौ तेन समर्पितौ वहवः जनानां सम्मर्दिभिरागताधिकारिवर्गैः धन्यवाद प्राप्तः स्व ग्रामं रघुदासपुरम् प्राप देवेशः।

स्व निर्मित भवने पितृगया श्राद्धयज्ञभोजे जन समूहैः चाकचक्याव-लोकितः। एषएव यदुनाथस्यपुत्रः जिलाधिकारी पुलिसाधीक्षक पुत्री सुषुमा एषा। धन्य यदुनाथः। इति संवादशीलाः जनाः।

कार्यक्रम समाप्ति पश्चात् शिविरं कृतं सुषमादेवेशाभ्याम् ग्राम वासिनः समाहूय स्त्रीपुरुषाणां परिवादान् निराकरणमकारयत् भविष्येऽपि सहाय्योऽहमिति आश्वास्य प्रहर्षा जनाः विसर्जिताः।

"आयुर्वेदोपदेशेषु विधेयः परमादरः" इति विचार्य ग्राम वासिनां हितार्थं राजकीय–आयुर्वेद चिकित्सालायार्थं स्व भवनं प्रदत्तं तथा सम्पूर्ण स्वकृषि सम्पत्तिं चिकित्सालयस्य व्ययार्थं समर्पितं तेन प्रबन्ध–समितिम्।

पूर्व शिक्षकस्य शिक्षावाक्यान् विचार्य सुषुमयासह शिक्षकः रजनीकान्तः गुरुवत् वस्त्रधनमिष्ठान्नादिभिः सम्मानितः तथा ग्रामवासिनः दीनजनारपि सम्मानिता धनवस्त्रादिभिः तथा शिक्षयति जनान्।

**"क्रियासिद्धिः सत्वेभवति महतां नोपकरणे"।**

मातृपितृ गुरु राष्ट्र विज्ञान कृषकवर्ग जवान इत्यादिकानां सम्मानेनैव समाजस्य राष्ट्रस्य चोन्नतिः सम्भाव्या नाऽन्यथा।

दायद (दहेज) बिना शिष्ट परिवारस्य कन्यां परिणीय दहेजदानवं पराजित्य युवकवर्गेभ्यरादर्शं प्रतिष्ठापयत्। सुषुमयाऽपि सैनिकाधि-कारिणा सहपरिणयं कृत्वादेशभक्तिः प्रदर्श्यनारीवर्गं समुन्नत्यै प्रेरितम्।

—सी–३५०४, सेक्टर–६, सपना कॉलोनी,

राजाजीपुरम्, लखनऊ, उत्तरप्रदेशः

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# जयदेवपद्मावतीकथा

—डॉ० रामकिशोर मिश्रः

बङ्गप्रदेशे वीरभूमिजनपदे केन्दुविल्वनामके ग्रामे गीतगोविन्दकारस्य कविवरस्य श्रीजयदेवस्य जन्माऽभवत्। कवेरस्य पिता भोजदेवो माता वामादेवी चाऽऽस्ताम्। अस्य पूर्वजाः कान्यकुब्जीया भारद्वाजगोत्रजाः श्रीहर्षस्य वंशजा आसन्। अस्य मातापितरौ बालकाले एव पञ्चत्वं गतौ। अतो बाल्यादनाथो जयदेवो धनसम्पत्यभावेऽपि येनकेन प्रकारेण जीवनं यापयति स्म। पूर्वसंस्कारवशादयं विद्याभ्यासात्कविर्बभूव।

ग्रामे जीविकाया अभावेन भगवद्भक्तिप्रभावेन च भगवद्दर्शनार्थमयमेकदा जगन्नाथपुरीमागच्छत्। तत्र स प्रतिदिनं भगवद्धर्शनं कुर्वन् यत्किकिञ्चत्प्राप्तमेव भुक्त्वा विरक्तसन्यासिवन्निवसति स्म। भगवद्भजनादृते तस्य न किमपि कर्माऽऽसीत्। तं तरुणं भगवद्भक्तमवलोक्य सुदेवो नाम ब्राह्मणः स्वमनसि तेन सह स्वपुत्र्याः पद्मावत्या विवाहं कर्तुं निश्चिकाय।

एकस्मिन्दिने तौ ब्राह्मणदम्पती स्वकन्यासहितौ तरुतले स्थितस्य भगवत्कीर्तनं च कुर्वतस्तस्य जयदेवस्य समीपे जग्मतुः। तौ वार्तामालपन्तौ तस्य समक्षं स्वदुहितुर्विवाहप्रस्तावं कृतवन्तौ। परमाश्चर्यं कुर्वाणो विषण्णः सन् जयदेवस्तौ न्यवेदयत्—"परमादरणीयौ श्रीमन्तौ! अहन्तु गृहत्यागी याचकोऽस्मि। इदं तरुतलमेव मे गृहम्। अत्रैव तिष्ठता भजनं च कुर्वता मया यत्किञ्चित्प्राप्यते, तेनैवाहं जीवनं यापयामि। किञ्चिद् व्यापारिणं वरं दृष्ट्वा स्वपुत्री विवाहयितव्या। तत्रैव युवयोः सुता सुखिनी भविष्यति। मम पार्श्वेतु भोजनमपि दुर्लभमेव स्यात्, पुनरहं विवाहं न चिकीर्षामि।

पद्मावतीजनकोऽब्रवीत्—वत्स! त्वं मया जामाता स्वीकृतोऽसि। भगवता जगन्नाथेन पद्मापरिणयं त्वया सह कर्तुमहं स्वप्ने कथितोऽस्मि। तदिमामावयोरात्मजां भगवतः श्री जगन्नाथस्य प्रसाद इति मत्वा पत्नीमङ्गीकुरु। प्रतिदिनमियं भवन्तं सेविष्यते। नाहं कथयामि यत्त्वमस्यै



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गृहं निर्माय ससुखं वस। यथात्वमत्र तरुतले वससि, तथैव त्वया सार्धमियमपि निवत्स्यति। त्वमस्याः पतिरियञ्च ते पत्नीत्युक्त्वा स सपत्नीकः स्वसुतां तत्रैव त्यक्त्वा स्वस्थानं जगाम।

अन्ते जयदेवस्तां पद्मामाकृत्या सुन्दरीं सुशीलां च विलोक्य जगाद—"देवि! तव पितरौ तु गच्छतस्त्वामत्र विहाय, परं ममेच्छा नास्ति विवाहस्य, अतस्त्वमपि तावनुगच्छ" इति तद्वचो निशम्य पद्मावती सादरं तं निवेदितवती—"स्वामिन्! मम पितरौ मां भवते दत्तवन्तौ। अतस्त्वामहं पतिं मन्ये। त्वमेव शरणम्। त्वमेव मे भगवानसि। यदि मां स्वपत्नीं नाङ्गीकुरुषे, नाङ्गीकुरु, परमहन्तु भवन्तं स्वधवमेव स्वीकरोमि। अद्यतनदिवसादहं त्वां स्वपतिरूपं सेविष्ये। यत्कथयिष्यासि, तदेव करिष्यामि परं भवन्तं त्यक्त्वा न क्वापि यास्यामि।"

पद्माया वचनं श्रुत्वा जयदेवस्तामकथयत्—"पद्मे! यदि त्वं मां पतिं कामयसे, तदेहि भगवज्जगन्नाथमन्दिरे तव पाणिं गृहीत्वाऽहं त्वां पत्नीं स्वीकरिष्ये।" तदनन्तरं तौ द्वौ तत्र गतौ। भगवतो दर्शनं कुर्वता जयदेवेन पद्मायाः पाणिर्गृहीतः, पद्मावत्या च तस्य चरणस्पर्शः कृतः। ततस्तौ सायं तदेव तरुतलमागतौ रात्रौ च भोजनं कृत्वा तत्रैव कुशासने निशीथे तौ दाम्पत्यसुखमनुभवन्तौ प्रथमसङ्गमशर्वरीं यापितवन्तौ।

प्रातरुत्थाय जयदेवः स्वपत्नीं पद्मां व्यज्ञापयत्—"देवि पद्मे! त्वन्तु साक्षात्पद्मासि। भगवता जगन्नाथेन स्वप्नेऽहं स्वगृहं गन्तुमुक्तोऽस्मि। अतः प्रिये! त्वया सह स्वग्राममद्य चलामि, तत्रैव पाण्डित्यं कुर्वन् ससुखं निवत्स्यामि" इति पतिवचनमाकर्ण्य पद्माऽतिप्रसन्नाऽभवत्। सा पतिमवादीत्—"प्राणनाथ! यदि भवतः कस्मिंश्चिद् ग्रामे निकेतनमस्ति, तर्हि मां गृहीत्वा भवता तत्रावश्यमेव गन्तव्यम्, येन स्वपूर्वजसदनं स्वबालकरवैर्गुञ्जितं भवेत् प्रियतम!" इति पत्न्याः सहमतिं गृहीत्वा जयदेवः सपत्नीकः केन्दुविल्वग्रामे स्वगृहमाजगाम।

ग्रामे निवसन् जयदेवः पाण्डित्यकर्म प्रारभत। सन्निकटग्रामेष्वपि



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स तस्मै कर्मणे गच्छति स्म। एकदा केनचिद् धनिकेन दक्षिणायां तस्मै प्रभूतं धनमदायि। तद्धनग्रन्थिं शिरसि यदा निधाय स स्वग्रामं प्रत्यायाति स्म तदा वनमार्गे पाटच्चरास्तं गच्छन्तमपश्यन्।

अहो! धनं कीदृशमनर्थकरं भवति? येन मनुष्या मदान्धा भवन्ति, हीनतया च लोभिनः प्रजायन्ते। धनकामेन ते चौरास्तस्कराश्च भूत्वा परस्परं रागद्वेषयुक्ताः सन्तो धनिकान् लुण्ठन्ति। यथा मांसशकलान्यवेक्ष्य गृध्रा गगनान्निपतन्ति, तथैव धनहीना मलिम्लुचा धनयुक्ताननुधावन्ति। अतो धनं सर्वविपत्तिकरम्, यस्य पार्श्वे विद्यते तद्रक्षणचिन्ताकरम्, यस्य च समीपे नास्ति तज्जीवनचिन्ताकरं भवति। धनहारकास्तस्करास्तं मार्गे निरोध्य चन्द्रहासैराहत्य हस्तौ पादौ च बद्ध्वा कूपे न्यपातयन्, धनग्रन्थिं च गृहीत्वा ततः पलायिताः।

गौडप्रदेशशासकस्य श्रीलक्ष्मणसेनस्य राजकविपदे नियुक्तो जयदेवो ग्रामं गत्वा स्वपत्नीं पद्मावतीमपि तत्रैवाऽऽनैषीत्। गौडप्रदेशं परितस्तस्य कीर्तिः प्रसृता। तस्य सर्वः समयो भगवतः श्रीकृष्णस्य भक्तौ व्ययते स्म।

एकस्मिन्दिवसे स श्रीकृष्णभक्तिमाश्रित्य गीतगोविन्दं प्रणयन् यदैकगीतरचने दत्तचित्त आसीत्तदा पद्मावती तत्पार्श्वमागम्य प्रार्थितवती "स्वामिन्! प्रातरारभ्य भवानद्य सुललितपदानि गायन् कवयति, परं मध्याह्नेऽपि भोजनं कर्तुं न विरमति। अंतो मां क्षमतां देवः, सम्प्रति स्नानाय स्वकवित्वसमाधिं त्यजतु, कृपया स्नानागारं गत्वा, शीतलसलिलैः स्नानं च कृत्वा भोजनान्ते काव्यं रचयतु प्रियतम!" इति पत्नीवचः कर्णगतं कृत्वा "प्रिये! एष उत्तिष्ठामि कवनाच्च विरमामि" इत्युदीर्य पुनरपि रचनाकर्मणि स संलग्नो बभूव।

यदा कविः स्वकाव्यं करोति, तदा स काव्यरचने दत्तचित्ततया सर्वाण्यपि कार्याणि विजहाति, न स्नाति, न खादति, न च पिबति। अस्मिन् समये यदि कश्चिदपरो जनस्तस्य पार्श्वमायाति, तदा स तेन सह वार्तालापमपि न चिकीर्षति। तस्मिन् काले तु तस्मै पत्नी-प्रियवचनान्यपि न रोचन्ते। किं बहुना? कविजीवनमेकतपः साधनाया जीवनमस्ति।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



किञ्चित्कालानन्तरं पद्मावती पुनराजगाम—"प्राणनाथ! भवन्तं क्षुधा सम्प्रति बाधते, एतद् भवदाकृत्या प्रतीयते। परं कविता भवतः प्रियाऽतीव, यां विहाय भवान् भोजनमपि न कर्तुमिच्छति। इत्थं प्रकारेण तु भवत्स्वास्थ्यापकर्षः स्यात्स्वामिन्! अतः कृपया विरमतु, स्नात्वा च किंञ्चिदशनं भक्षयतु हृदयेश्वर!" इति श्रुत्वा "प्रियतमे! प्रथममत्रागच्छ, मम गीतं शृणु" इत्थं निगद्य स तत्करं गृहीत्वा तां स्वपार्श्वमुपावेशयत्, कवितां च गायन् श्रावयितुमारभत—

**ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे ।**
**मधुकरनिकरकरम्बितकोकिलकूजितमलयसमीरे ॥**
**रतिसुखसारे गतमभिसारे मदनमनोहरवेशम्।**
**न कुरु नितम्बिनि! गमनविलम्बनमनुसर तं हृदयेशम्॥**
**धीरसमीरे यमुनातीरे वसति वने वनमाली।**
**गोपीपीनपयोधरमर्दनचञ्चलकरयुगशाली ॥**
**मुखरमधीरं त्यज मञ्जीरं रिपुमिव केलिसुलोलम्।**
**चल सखि! कुञ्जं सतिमिरपुञ्जं शिथिलय शीलनिचोलम्॥**

कथय, प्रिय! कीदृशं मम गीतम्? इति गीतमधुरतां कर्णगतां कृत्वा पद्मयापि—"प्रियतम! त्वदीयमिदं मधुरगीतं मदीयं मनस्तथैव हरति, यथा श्रीकृष्णो वेणुमधुरध्वनिना गोपीमनो हरति स्म"। इति निवेदितम्। जयदेवोऽपि—"प्रिये गीतभावनया त्वमसि मे गोपी कृष्णश्चाऽहम्। अतोऽहं तव प्रेमपिपासुरस्मि, प्रथमं मम पिपासां रतिरसेन शमय सुभगे! प्रेमरसप्लावितं तवाऽधरमिदम्" इति वदन्मुखञ्च चुम्बन् बाहुपाशबद्धां कृत्वा वक्षसा तामालिलिङ्ग।

कविरित्थं प्रतिदिनं स्वप्रियां पद्मावतिसुन्दरीमवलोक्य तस्या रूपलावण्यादिना प्रभावितो भूत्वा कृष्ण इव तां कदाचिद् राधां ज्ञात्वा कदाचन च गोपिकां मत्वा तद्रतिनद्यां निमज्जन् प्रेमरसपानं च कुर्वन् गीतगोविन्दं प्रणिनाय।

—पट्टी-रामपुरम्, खेकड़ा,
बागपत (उत्तरप्रदेश)



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अधुना कीदृशी जाता

—डॉ० गोपालनारायणः शर्मा

एकदा एकः नृपः आसीत्। तस्य नाम राजेन्द्रसिंहः आसीत्। सः अतीव क्रूरः आसीत्। यद्यपि सः शास्त्रज्ञः धर्मपरायणः नैव आसीत् परं तस्या भार्या विद्यावती सुशीला, धर्मपरायणा शास्त्रज्ञा च आसीत्। राजेन्द्रसिंहः तु सदैव युद्धे, आखेटे, द्यूते च स्व कालं यापितवान् आसीत्। धर्मचर्चा शास्त्रवार्ता तस्मै नैव अरोचत। विद्यावती तु सदैव धार्मिक-आयोजने स्व जीवनं व्यतीतं करोति स्म। तस्याः कक्षे श्रीरामचरितमानसस्य, श्रीमद्भागवतस्य, श्रीशिवपुराणस्य च कथा आयोजनानि सम्पूर्ण सम्वत्सरे भवन्ति स्म। सा अतीव सुहृदया दयावती च आसीत्।

तस्य नृपस्य राज्ये एकस्मिन् ग्रामे चत्वारः ब्राह्मणाः आसन्। ते जन्मना एव ब्राह्मणाः परं ब्राह्मणानां कर्मणः वर्णमालया अपि अनभिज्ञाः आसन्। गृहे परिजनाः कथयन्ति स्म तान्, "गच्छत, किमपि कार्यं कुर्वन्तु। अत्र प्रतिदिनं प्रातःकाले सायंकाले च भोजनार्थं आगमने लज्जायाः अनुभवं नैव कुर्वन्ति?" यूयम्। उपालम्भं पुनः पुनः श्रुत्वा ते व्यथिताः अभवन्। तदा ते अचिन्तयन्, "किं करणीयम्? क्व गमनीयं?" तदा तेषु ज्येष्ठः जबररामः अवदत् "अहं मन्ये ब्राह्मणवृत्तिः एव श्रेष्ठा। एषा एव उपयुक्त आजीविका भवितव्या अस्मभ्यम्।" "परं वयं तु निरक्षराः एव स्मः। किं करिष्यामः वयं?" द्वितीयः ब्राह्मणः अवदत् यस्य नाम कचरूमलः आसीत्।" चिन्ता मास्तु। नगरं चलिष्यामः तत्र यत् किमपि कार्यं मिलिष्यति तत् एव वयं करिष्यामः तृतीयः स्व विचारं व्यक्तवान्।

इति विचार्य ते आजीविकायै स्वग्रामं त्यक्त्वा नगरं प्रति प्रस्थानं कृतवन्तः।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र प्रतिदिवसे धार्मिक-आयोजनं दृष्टवा नृपः स्व भार्यां पृष्टवान् यत् एभिः धार्मिक-आयोजनैः किं भवति? अतिविनयेन महाराज्ञी उक्तवती अस्माकं राज्ये सुखानि, समस्त-ऐश्वर्याणि च एषाम् आयोज-नानां एव सुफलानि सन्ति यतः एभिः आयोजनैः ईश्वरः प्रसन्नः भूत्वा मनोवाञ्छितं फलं यच्छति। तस्या वचनं श्रुत्वा महाराजः पृष्टवान् मया अपि किमपि धार्मिकायोजनं कर्त्तव्यं वा? राज्ञी हर्षित्वा अवदत्? "आम् किमर्थं नैव? अवश्यमेव करणीयं धार्मिक-कथायाः आयोजनं भवद्भिः।" "तदा कस्या कथायाः आयोजनं भवितव्यम्?" महाराजः प्रश्नं कृतवान् "रामचरितमानसस्य आयोजनं समीचीनं भविष्यति" उत्तरं दत्तवती राज्ञी।

अहमेव आनेष्यामि पण्डितान् ये कथावाचनं करिष्यन्ति। तदा महाराजः यः जीवने कदापि कापि धार्मिक-कथां नैव श्रुतवान् आसीत्। पण्डितानाम् अन्वेष्णाय अश्वम् आरूह्य नगरात् बहिः गतवान्। मार्गे ते चत्वारः मूढाः ब्राह्मणाः आगच्छन्तः आसन्। तान् दृष्ट्वा महाराजः कठोरस्वरेण पृष्टवान्, "के यूयम् कुतः आगच्छन्तः सन्ति? कुत्र गच्छन्ति च?" ते तु चकिताः आसन् अतीव भीत्वा शुष्कस्वरेण अवदन् लाम्बाग्रामस्य ब्राह्मणाः स्मः वयं। आजीविकायै नगरं प्रति गच्छन्तः स्मः। नृपः मनसि प्रसन्नः भूत्वा पृष्टवान्, "धार्मिक कथायाः वाचनं करिष्यन्ति मम राजभवने?" ते त्वरया अवदन् आम् करिष्यामः।

महाराजः तान् मूढब्राह्मणान् स्वराजप्रासादे आनीतवान् तेभ्यः आवासाय सर्वोत्तम व्यवस्था कृतवान्। सुवासितस्नानस्य, शुभ्रबहुमूल्य-वस्त्राणां, स्वर्णाभूषणानां च अपि व्यवस्था महाराजेन ब्राह्मणेभ्यः कृता। धार्मिक-कथायोजने वाञ्छित-सामग्री अपि तत्र प्रभूतमात्रायां आसीत्। रात्रौ तु ते चत्वारः स्वादिष्ट-विविध-व्यञ्जनानाम् आनन्दं ग्रहीत्वा बहुमूल्य-पर्यङ्केषु शयनं कृतवन्तः परं निद्रायाम् अपि एकः एव विचारः पुनः पुनः आगच्छन् आसीत् यत् वयं तु निरक्षराः स्मः श्वः किं करिष्यामः? इदृशं विचारे एव सम्पूर्ण रात्रिः व्यतीता। राजा पूर्वमेव



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उक्तवान् आसीत् यत् प्रथमदिवसे प्रथमः पण्डितः कथावाचनं करिष्यति, द्वितीयदिवसे द्वितीयः इदृशमेव तृतीयादिवसे चतुर्थदिने च क्रमशः तृतीयः चतुर्थः पण्डितः कथावाचनं करिष्यति।

प्रातःकाले दैनिककार्याणि कृत्वा नगरस्य प्रथमद्वारे स्थित प्रासादे रामचरितमानसस्य वाचनाय प्रथमः पण्डितः आहूतः सः तु पूजां कृत्वा मानसस्य पुस्तकं उद्घाट्य मनसि चिन्तितवान् अधुनां किं करणीयम्? पुस्तके मुद्रितानि अक्षराणि तु तस्य समक्षे कृमयः सदृशाः आसन्। सः बहुवारं स्व कण्ठं उत्कासितवान्। पुनः पुनः हुंकारं कृतवान्। राजा उक्तवान् "आरम्भयतु।" सहसा ब्राह्मणेन निगदितम् "**अधुना कीदृशी जाता**"? एकदा पुनः उक्तवान् "**अधुना कीदृशी जाता?**" राजा जीवने कदापि यथा–श्रवणं नैव कृतवान् आसीत सः विचारं कृतवान यत् एषा कापि गूढा उक्ति अस्ति यस्या भावार्थ अहं न ज्ञातुं शक्नोमि। राज्ञीं निकषा गत्वा पृष्टवान् यत् पण्डितः कथायां उक्तवान् "**अधुना कीदृशी जाता?**" राज्ञी तु विदुषी आसीत् सा ज्ञापितवती यत् सः ब्राह्मणः तु मूर्खः अस्ति परं यदि नृपं ईदृशं कथयामि तु एषः तस्मै दण्डं दास्यति। इति विचार्य सा उक्तवती पण्डितः जानाति यत् भवन्तं समीपे तु समयस्य–अतीव अभावः अस्ति। अतः सूत्ररूपेण स इमां कथाम् अकथयत्। सः, अयोध्यापतिः महाराजदशस्थस्य पञ्चतत्त्व–गमनसमयस्य वृतान्तं सूत्ररूपेण उक्तवान् अस्ति यत् राज्ञः वशिष्ठः च चिन्तितवन्तः यत् रामः तु सीता–लक्ष्मणेन सह वनं गतवन्तः भरतः शत्रुसूदनः च स्व मातामहस्य गृहं गतवन्तौ स्तः अत्र महाराजदशरथस्य मरणम् अभवत् अतः "**अधुना कीदृशी जाता?**" राजा अतीव प्रसन्नः भूत्वा प्रथमाय पण्डिताय प्रभूतं धन–धान्यं दत्वा सत्कारं कृतवान्।

द्वितीयदिवसे नगरस्य द्वितीयद्वारे स्थिते राजप्रासादे द्वितीयः ब्राह्मणः पूजानन्तरं प्रथमब्राह्मणेन घटिताघटनायाः स्मरणं कृत्वा केवलम् उक्तवान् यत् "**भवत्सु या जाता सा एव अस्मासु जाता।**" महाराजः पुनः रनिवासं गत्वा महिषीं पृष्टवान् तत् श्रुत्वा सा विदुषी अवदत् यत् सः द्वितीयः ब्राह्मणः किष्किन्धाकाण्डं सूत्ररूपेण उक्तवान् अस्ति यत् रावणेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सीता अपहृता तथैव सुग्रीवस्य भार्यां बालिना ग्रहीता। अतएव सुग्रीवः रामं इदृशं उक्तवान् यत् "**भवत्सु या जाता सा एवं अस्मासु जाता।**" नृपः तस्य द्वितीयब्राह्मणस्य स्वर्ण-धन-धान्यैः सम्मानं कृतवान्।

तृतीयदिवसे दिनद्वयोः अनुसारेण नगरस्य तृतीय-द्वारे स्थिते दिव्यराजप्रासादे तृतीयः ब्राह्मणः अर्चनां कृत्वा पूर्वद्वयोः ब्राह्मणयोः घटनां संस्मृत्य उक्तवान् '**एषा स्थिति कियान् समयपर्यन्तं चलिष्यति।**' राजा गूढार्थाय पुनः रनिवासं अगच्छत् पृष्टवान् च। तदा महिषी निवेदितवती यत् एषः लङ्का—काण्डस्य सारम् अस्ति यत् यदा कुम्भकर्णः मेघनादः च अपि सुरलोकं अगच्छताम् तदा मन्दोदरी दशाननं उक्तवती यत् एषा स्थितिः कियान् समयपर्यन्तं चलिष्यति? नृपः तस्मै अपि बहुमूल्यानि आभरणानि रत्नानि-वस्त्राणि च दत्वा तस्य सम्मानम् अकरोत्।

अन्तिमदिवसे चतुर्थः ब्राह्मणः पूजां कृत्वा अकथयत् "**यावत् चलेत् तावत् चालयतु।**" राजा राज्ञीं समया गत्वा अपृच्छत् तस्या उक्तेः भावार्थम्। तदा विदुषी राज्ञी उक्तवती यत् यदा रावणस्य सर्वे वीराः दिवंगताः तदा सेनापतेः प्रश्नस्य उत्तरे दशग्रीवः उक्तवान् यत् "**यावत् चलेत् तावत् चालयतु।**" महाराजाः चतुर्थब्राह्मणाय अपि प्रभूतं धनादिकं दत्वा सम्मानं कृतवान् तदा राज्ञी स्वकक्षे तान् ब्राह्मणान् आहूय उक्तवती च "**अधुना अनेन धनेन स्वसामर्थ्यानुसारेण वृत्तिं करोतु जीवने पाण्डित्यं मा कुर्वन्तु अन्यथा शुभं नैव भविष्यति।**" ते अपि धन्यवादः, इति उक्त्वा स्व ग्रामं गतवन्तः।

असत्यव्याख्या अपि यदि कस्य प्राणरक्षा भवति तर्हि तत् असत्यं सत्यमेव अस्ति।

सत्यमेव कथितं यत्—

**अष्टादश पुराणेषु, व्यासस्य वचनद्वयम्।**
**परोपकारः पुण्याय, पापाय परपीडनम्॥**

—रावरम्, जिला-जोधपुरम्-३४२६०५

(राजस्थानम्)



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# परमध्येयः

—अनिरुद्ध भारद्वाजः

एकदा कस्मिंश्चिद्धर्मनगरे सत्यशीलो नामको नवयुवको निवसन्नासीत्। तस्य धार्मिकाचरणविषये लोकप्रसिद्धिरासीत्। सदाचारीजीवनमपि तेन वंशपरम्परातः प्राप्तमासीत् यतस्तस्य पितामहः राजपण्डितोऽऽसीत्। तस्य पितुरप्येकं गुरुकुलमासीत्। माताऽपि साक्षात् कौशल्यायास्सृदश्यासीद्यस्याः धर्मस्तस्याः पतिपुत्रयोः सेवाकर्म एवासीत्। सत्यशीलस्य पार्श्वे सर्वमासीद्यथैकमुच्चकुलञ्जगत्प्रसिद्धि स्म सम्मानञ्च परन्त्वेका समस्याऽसीद्यत्तस्य मनसि सदैवान्तरिकद्वन्द्वरुत्पद्यमानोऽसीत्। सो नित्यमनवरतञ्जगतो नियन्तुर्विषये ज्ञातुमिच्छति स्म। तस्य मस्तिष्केऽनेकाः प्रश्नाऽऽसन् यथा कोऽस्माकं निर्माता, कः प्रेरकस्का चाऽस्माकङ्गतिर्भवति मृत्यूपरान्ते। कुतः वयमागता कुत्र च वयङ्गन्तारस्स्मः। सोऽपि तथागतबुद्धेन सदृशो भूत्वाऽत्मसाक्षात्कारीति भवितुमिच्छति स्म। एषाम्प्रश्नानां समाधानायोपशमनाय च तेनानेकाः प्रयासा कृताः परन्तु केनचिद्प्युत्तराणि न दत्तान्यासन्। अधुना तेन मौनं धृतमासीत्। तञ्च दृष्ट्वा तस्य मातापित्रोर्मनसोरपि क्लेशश्जातोऽसीत्।

कस्मिंश्चिद्दिने पिता सत्यशीलमवगमयितुम्प्रारभत् "पुत्र! त्वमिदानीमप्येको सुकुमारबालकोऽसि तस्मान्न त्वयाऽयं व्रतो धरणीयास्याम्बाल्यावस्थायाम्। एषस्तव विद्याध्ययनस्य समापनस्य समयोऽस्ति कतिपयाद्वर्षान्तरे च तव गृहस्थाश्रमोऽप्युक्रमो भविताऽसि। एतद्गुरुकुलमपि त्व्य्येवाश्रितमस्ति। त्वमेवैतस्य रक्षकः पोषकश्च भविष्यसि। अन्यच्च त्वन्त्रिऋणेभ्योऽप्युत्रृणो भवितव्योऽसि।" माताऽपि तत्रैवासीत् साऽप्यकथयत्—"किमर्थन्त्वं स्वमातापितरौ दुःखदातुमिच्छसि?" पुत्रोऽपि तूष्णीम्भूत्वा सर्वं श्रृणवन्नासीत्। सोऽप्यकथयत् "मातः! मयाऽत्र सर्वत्र सांसारिके समाजे शन्तिर्न प्राप्ता। अहमधुना वने गत्वैकान्ते समाधावात्मसाक्षात्कारङ्कर्तुमिच्छामि।"



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुत्रस्य वनगमनस्य वार्ता श्रुत्वैव मातुराननमाश्र्वाकुलितमभवत्। तयाऽकथयत्—"त्वङ्कस्मिंश्चित् वने न जातोऽसि। तव जन्मोऽस्मिन् समाजैवाभवत्। त्वन्न केवलं मम पुत्रोऽस्यपितु समाजस्यैतस्य राष्ट्रस्य च पुत्रोऽप्यसि। अत एव त्वया वने न गन्तव्यमस्ति। अपि चावां आवयोः प्रपौत्रञ्च द्रष्टुमिच्छावः। त्वमावयोरिदं स्वप्नजगत् प्रलय-कालीनमेघानां गर्जनेन एकेक्षणैव ध्वस्तंकर्तुमिच्छसि। किन्न त्वयि हृदये लेशमात्रेण काचिदपि दयाऽस्ति?"

एतत्श्रुत्वा सत्यशीलस्य नेत्रयोऽप्यश्रुधारा प्रवाहिताऽभवत्। तस्य हृदयोऽपि चिन्तारेखाभिः मातुः विषण्णवदनन्दृष्ट्वा द्रवीभवन्नासीत् परन्त्विदानीमपि स स्वमिहलोके एकाक्येवानुभवति स्म। स स्वप्रश्ना-नाञ्जालकेष्विदृक्तया सङ्ग्रथितोऽसीद्यथेको मृगशावकः कस्मिंश्चद्वने निर्जनस्थाने कर्दमे सहसा संलग्नो भवति। एवं सत्यशीलेन वारं-वारं मातापित्रोस्समक्षे वनगमनस्य कृतेऽनुमतिर्याचिता। चिरेण अस्मिञ्च क्रमे मातापितराभ्यामपि वनगमनाय तमनुमतिः प्रदत्ता परन्त्वेकमासोपरान्ते।

इदानीं सत्यशीलोऽन्तस्तलेनातीव प्रसन्नोऽसीत्। तस्य प्रसन्नतायै-कङ्कारणमासीद्यत्सस्तस्य मातापित्रोरनुमतिना गच्छन्नासीद् परन्तु तस्य कृते तस्यैकमासस्य कालस्य एकैको दिवस एकावर्षादधिकतरोऽऽसीत्। तस्मिन्दिवसेऽपि स तस्य दैनिकचर्यानुसारेण ईश्वरवन्दनाङ्कृत्वा रात्र्यां शयनाय तस्य शय्यायां संविष्टोऽभवत्। तस्य शय्या प्राङ्गणेऽऽसीत् तारकसंभृतोभव्याकाशस्तस्य नेत्राभ्यां समक्षेऽऽसीत्। शीतलपवनोऽपि मातृसदृश्या स्वस्य हस्तस्य मृदुकरतलपरामर्शेन तं शाययितुम्प्रया-सङ्कुर्वन्नासीत्। अन्ये च क्षणे स प्रगाढ़निद्रामग्नोऽभवत्। निद्राजगत्यपि सोऽऽत्मिकसाक्षात्कारकर्तुङ्कस्मिंश्चिदज्ञातपथि सततं गच्छन्नासीत्। सैकस्मिनज्ञातवने प्रविष्टोऽभवत्। भानुरस्ताचलगमनशीलोऽसीत्। आकाशोऽपि शिरसि किञ्चिद् नम्र्यभवत्। दूरे च वृक्षेषु मध्ये प्रतिक्षण-मस्तमानो दिवाकरोऽन्धकारं वर्द्धयन्नासीत्। सुदूरेषु पर्वतेषु घोरगर्जितघनेषु



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वारं–वारं विद्युत् इदृक्तया दीव्यत्यासीद्यथा केचित् श्यामवर्णाः वनेचराः खङ्गैरुध्यन्ते। स तूष्णीम्भूत्वा तस्मिन्वने चलन्नासीत्। अकस्मादल्प–वृष्टिरपि प्रारभत्। तस्य शरीरो शीतेन कम्पायमानोऽसीत्। वनादागताः विचित्राः भयङ्कराश्च ध्वनीन्प्रति स वारं वारं अनिमेषदृष्ट्या चिराय पश्यति स्म। तस्य मनस्यप्यशुभविचारा आगच्छन्नासन्। समीपस्थस्य पर्वतशृंखलायाः प्रवहन्नुत्सस्य जलस्य ध्वनि इदृक्तया प्रतीतयन्नासीद्यथा मनुष्यभक्षणोपरान्तेन वनप्रेताः परस्परमनोविनोदं कुर्वन्नसहायेभ्यः मनुष्येभ्यः क्ष्वेलाकुर्वन्नासन्। कदाचित्तस्य वनस्य शुष्ककूपसमनीरवता कदाचिच्चाप्रत्याशिता भयङ्कराः ध्वनयः बिभयन्नासन्। भयभीतोऽपि साग्रे गच्छन्नासीत्। धरण्यां सर्वतो व्यापृता वृक्षाणान्दीर्घा जटारपि सेदृक्तयोल्लङ्घयन्नासीद्यथा कश्चिद् सैनिको युद्धक्षेत्रे शवेषूत्तरन्नग्रेसरति। दूरस्था अन्धतमसे विद्यमाना विकृतपर्वत शृंखलाऽपीत्थं दृष्टाऽसन् यथा रात्र्यां परिश्रान्तो गजसमूहो विश्रमण्णासीत्।

अकस्मादनेनैकस्य वृक्षस्य पृष्ठभागैका प्रविचलन्ती छाया दृष्टा। स भीत्वा पृष्ठोऽभवद् समीपस्थे वृक्षवारोढुमुद्यतोऽभवद् परन्तु स छायापुरुषस्सहसा तस्याग्रे प्रकटितोऽभवत्। सा विशालाकृतिरतीव भव्याऽसीत्। तस्यां निबिडान्धकरमयां रात्र्यां यस्याङ्कोऽपि जनस्स्वस्य हस्तमपि द्रष्टुन्न शक्नोति स दैवाकृतिः शरदर्तो पूर्णचन्द्रमासदृशो दृष्टोऽसीत्।

सत्यशीलः किङ्कर्त्तव्यविमूढो भूत्वा तं दैवपुरुषं ईश्वर इति मत्वा तस्याग्रे स्वमस्तकन्नतमकरोत्। सहसा गुञ्जायमानानामेका दैवीया मानववाणी तस्य कर्णकुहरयोः प्रविष्टा। तेन पृष्टं—"कस्त्वम्? कुतश्चाऽत्रागतोऽसि?"

सत्यशीलेन सर्ववृत्तान्तं तस्याग्रे कथितम्। ततश्च तेन दिव्यपुरुषेण कथितम्—"वनदेवताऽहमस्मि। विस्रब्ध। तव त्यागः प्रशंसनीयः परन्तु त्वं स्वस्य समाजस्य भविष्यमेवाच्छिन्दन्नसि यतः त्वमेव एतस्य



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



समाजस्य आगामीस्वरूपोऽसि। त्वङ्केवलं जीवस्य एकपक्षं चिन्तयन्नसि। यदि त्वमज्ञानरूपात्मकस्यैतस्य जगतरनुभूतिङ्करोसि तर्ह्यैव त्वयाऽ-लौकिकस्य जगतरनुभूतिसाधकस्य ज्ञानस्य प्राप्तिर्भविष्यति। त्वया इदं जगत् मिथ्येति मन्यते परन्तु वस्तुतः पङ्कैव कमलञ्जायते। यथा क्षुधाकुलेन तृषाकुलेन व्यक्तिनैव भोजनस्य जलस्य महत्ताया ज्ञानम्भवति तथैव चतुर्वर्गस्य सर्वोच्चावस्थायाः प्राप्तये चतुराश्रमरूपसोपान् क्रमेणा-रोहणमपरिहार्यमस्ति। वस्तुतः ईश्वरस्यन्वीक्षणस्येच्छाऽपि तव मनसि अस्मिन्नेव समाजे निवसनेनैवोत्पन्ना जाता। यावदनुरागो नास्ति तावत्पर्यन्तं विरक्तिरपि न भवति। वस्तुतः मातापित्रोराज्ञापालनं समाजे च प्रत्येकस्य जीवनस्य सेवाकर्म एवं ईश्वरस्य सेवा भवति तयैवात्म-साक्षात्कारस्य मार्गोऽचिरेण प्राप्तो भवति। वस्तुतः अयमेव मोक्षप्राप्तेः लघुतममार्गोऽस्ति। त्वत्सदृशारनेकाः परिभ्रष्टाः जनाः सत्यान्वेषायास्मिन् वने दन्द्रव्यमाना कालकलविताऽभवन् तेषाञ्च स्थितिस्तु घोरतराभवद्यैः मानवयोनौ प्राप्तमिदं मोक्षसाधनं दुर्लभं शरीरञ्चाऽपि त्यक्तम्।"

इदानीं सत्यशीलेन ज्ञातमिदम्यत् वैरागस्यार्थो गृहत्यागो न भवत्यपितु समाजे निवसन् स्वदायित्वानां निर्लिप्तभावेन कर्त्तव्य-पालनञ्चैव वास्तविकरूपेण वैराग्यो भवति। एष एवं परमध्येयो भवति। सत्यशीलो यथैव दैवपुरुषस्य धन्यवादज्ञापनाय तस्य चरणस्पर्शनायाग्रे नमितोऽभवत्तथैव स दैवपुरुषोऽन्धकारे विलीनोऽभवत्तस्मिञ्च क्षणे सत्यशीलस्य निंद्रा भग्ना जाता। एष सूर्योदयस्य कालोऽसीत्। तेन दृष्टं यत् पक्षीशावकाः स्वपरिवारेण सह मृदायां स्नानशीलाऽसन्। वात्सल्यमयी एका गौ तस्याः वत्सं लिहन्नासीत्। आकाशेऽपि कलहंसवृन्दं दृष्ट्वा स चिन्तमानोऽभवद्यद् स स्वपरिवारेण सह पुण्यकर्मभिर्विशुद्धो भूत्वा वैकुण्ठधामं गच्छन्नासीत्। इदञ्चिन्तयन् तेन स्वदुःखीभूतयोर्मातापित्रोस्मर्रणमभवत्। स त्वरेण मातापित्रोः कक्षेऽगच्छत्। तत्र माता भोजनपाचने निरताऽसीत् पिता च प्रातः



CC-0.Panini Kanya Maha.Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वन्दनायाम् ध्यानमग्नोऽसीत्। स मातुः पार्श्वेऽगच्छत्। माताऽवदत्—"वने गत्वा त्वं कथं खादयिष्यसि? इत्येतस्य चिन्तनमात्रेणैव मम शरीरं भयेन कम्पितं जातं प्राणश्चोर्ध्वगामी भवति।" इति कथयित्वा माता रोदनमारभत्। सत्यशीलेन च सहसा कथितम्—"नहि नहि मातः! कुत्रापि न गमिष्याम्यहम्। ते विचारास्तु मम बालबुद्ध्याः आसन्।" ततः तेन स्वस्वप्नस्यालौकिकज्ञानयात्रायां सर्वं वृत्तान्तं श्रावितम्। मातापितराभ्याञ्च तस्यालिङ्गनं कुर्वन्न ईश्वरस्कृते बहुधा धन्यवादः कृतः।

वस्तुतः सत्यशीलेन जीवनस्य परमध्येयस्य ज्ञानं प्राप्तमासीत्। अधुना तेन सर्वासु सांसारिकध्वनिषु एकमात्रेण 'ॐ' इत्येतस्याः ध्वनेः श्रवणं भवति स्म।

(अस्याः कथायाः शिक्षेयमस्त्यदीश्वरस्य ब्रह्मणः वोभयविध-स्वरूपयोर्साक्षात्कारणमावश्यकमस्ति। अर्थात् विद्याविद्ययोरुभयोर्ज्ञान-मपरिहार्यमस्ति मोक्षाय। अन्यच्च ज्ञानं वने एकान्ते वा नास्ति। तत्तु सार्वकालिकं सर्वव्यासञ्च तत्त्वमस्ति। प्रत्येकं जीवस्य स्वरूपे ईश्वरो वसति। लोके च निवसन् निर्लिसरूपेण मातापित्रो समाजस्य च सेवैव मानवस्यात्मिकसाक्षात्कारणस्य मार्गः परमध्येयश्चाऽस्ति।)

—५४२/३, अपर आनन्द पर्वतः,

नव दिल्ली-११०००५

—:: o ::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# 'धर्म एव जयते'

—प्रणव भारद्वाजः

अनेके दिवसाः विगता आसन् परन्तु आकाशो व्योमधूममुक्तो नाभवत्। सन्ध्यावेलाऽसीदेषा। रेभमाणा गोवृन्दोऽपि स्वान्-स्वान् गृहान्प्रति गच्छन्नासीत्। नवशिक्षिततरितासदृशः सन्ध्याकालीनसूर्योऽपि प्रतीचीसागरे प्रतिक्षणं निमज्जन्नासीत्। प्राचीदिशि विद्यमानो आकाशगच्छन्त्याट्टालिकायुक्तो दुर्गो यो दिवसस्य प्रकाशे कयाचित् विशालदैवमूर्त्यास्सदृशो दृष्टोऽभवत् सेदानीं रात्र्य अवकिरन्त्यामश्यां लिप्तो भवन्नासीत्तदानीञ्च सो दुर्गः केनचित् भयङ्कराकृतियुक्तेन विशाल-दैत्येन सदृशो दृष्टो भवन्नासीत्। तत्र च सर्वोच्चाट्टालिकायां मध्ये समानदूरस्थे वातायने उद्घाटिते आस्ताम् ताभ्याञ्च कक्षस्यान्तरिकः प्रकाशो वातायनयोर्बहिर्व्यापृतानां रक्तपुष्पलतानां पुष्पाणाम्मध्यात् निःसरन्नासीत्। प्रतीतयन्नासीद्यदधुनैव तेन दैत्येन सर्वं दिनं सुप्त्वा रात्रस्यारम्भे जागरित्वा स्वस्य नेत्रे उन्मीलिते। सैषो दुर्गोऽऽसीद्वीरपुरस्य। सोऽद्य शत्रुराज्यस्य राज्ञा प्रचण्डसेनेन पराजितोऽभवत्।

विगतकालेषु यो दुर्गो रात्र्यामपि सहस्रदीपपङ्क्तिभिः काञ्चनमेव प्रज्ज्वलति प्रदीप्तो वा भवति स्म स त्विदानीं कस्मिंश्चिदन्धतमसे ईदृक्तयाऽवलिप्तोऽभवद्यथाऽप्रत्याशिते सद्यागते प्रभञ्जने सरसिजः पङ्के लिप्तो भवति। सम्पूर्णेषु वीरपुरेषु कस्याश्चिद् श्मशानभूमिसदृशा नीरवता व्यापृताऽसीत्।

वीरपुरस्य भूतपूर्वो महाराजा धर्मशीलः तस्य प्रधानामात्यः सेनापतिः धर्मयोद्धानामादीनाञ्चैका पङ्क्तिः दुर्गस्यैके विशालकाये कक्षे निगडेषु निबद्धा स्थिताऽसीत्। तेषामियं स्थितिः दुर्गस्य राज्यस्य वा केषांश्चिद् विश्वासघातीनां शत्रूणाञ्चानेकानां षड्यन्त्राणाम्परिणामस्वरूपेणाभवत्। तदानीमेकस्यां पङ्क्त्यामन्धतमसे स्थिताः सर्वे जनाः क्रोधाग्नौ गर्जमद्भिः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



समदमहावारणैः सदृशा आत्मसम्मानेन च व्यूढोरस्का सन्तः स्थिता ये प्रायः कस्मिंश्चिद् क्षणे पाणिपादेषु बद्धान्निगडान् कमलनालसदृशम्मत्वा त्रोटयितुमुद्यताऽसन्।

सहसा तस्मिन् विशालकक्षे कतिपयाः दोलायमानाः प्रकाशरेखाः प्रविष्टमानाः दृष्टाः। क्रूरः प्रचण्डसेनस्स्वेन रक्षकैः सह तस्मिन् विशाल-कक्षे प्रविशन्नासीद् दीपशिखाधारकाश्च तस्य सेवकगणाः तस्याग्रे प्रचलन्नासन्। दीपशिखानाम्प्रकाशकिरणाः राजाधर्मशीलेष्वन्येषु च बन्धकेषु न्यपतत्, तेषाञ्च मुखानि द्विमुखज्वालामुखीवासन् येषामाग्ने-योद्गार-अचिरेण प्रस्फुटितमानोऽसीत्। प्रचण्डसेनः तेन रक्षकैः सह तेषां समक्षे ईदृश-स्स्थितोऽसीद्यथा गिरेः निपतितान् सिंहान् स्वेषाम-वसरप्रतीक्षायामधीराः वृकयूथमुपरुन्धन्ति।

अकस्माद् प्रचण्डसेनोऽवदत् "मम कथनमङ्गीकुरुत। यूयं न केवलं मुक्ताः भविष्यथ पुरस्कृताश्चापि भविष्यथा।" "संसारस्य काऽपि शक्तिः अस्मान्नमयितुन्न शक्नोति प्रचण्डसेन!" पङ्क्तौ एका गर्जनध्वनिः श्रुता, "वयं मृत्योरालिङ्गयिष्यामः किन्तु तवेच्छापूरणं न करिष्यामः।" एतद्श्रुत्वा प्रचण्डसेनस्य क्रोधाग्न्वुद्दीसोऽभवत् तस्य च दक्षिणो हस्तः सहसा तस्य खड्गमूले संलग्नोऽभवत्। क्रोधे सोऽवदत्—"प्रचण्ड-सेनस्स्वकथनमङ्गीकरणं सुष्ठुरूपेण जानाति।" तदा तेन स्वसैनिकान्प्रति कथितं यत्—"सर्वान् आजन्मकारावासे निपतथा। धर्मशीलस्य कृते च काठिन्यतरं दण्डविधानां भवितव्यम्। (सैनिकाः तान् सर्वान् गर्भागारान्प्रति गृहीत्वा कक्षाद्निर्गता आसन्।) ऋतानुरागिणः राष्ट्र-सेवकस्य धर्मशीलस्य निपातनं एकस्मिन् मलिने गर्ह्वे गर्भागारे कृतं यस्मिन् दुर्गन्धिः क्षुद्रकीटाः रक्तपाश्चानेकाः अविद्यन्त। भानोदयः भानोरस्ताचलगमनं कदाऽभवत् तेनेदन्न ज्ञायते स्म। भोजनमपि केवल-मेकवारं प्राप्यते स्म दिवसे, तदप्यपक्वमेव।

कारावासेऽपि धर्मशीलस्य मनसि कदापि निराशा नागताऽसीत्



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यतः अद्यावधि तस्य लक्ष्यपूर्तिः नाऽभवत्। तेन तु अवश्यरूपेण वीरपुरस्य दुर्गस्य मुक्तीकरणं करणीयमासीत्; परन्तु तस्मिन् काले तु तस्माद् गर्भगारादेव मुक्तिप्रापणमतीव दुष्करमासीत्। स अवसराकाङ्क्षिणो भूत्वा शान्त्या प्रतीक्षणं कुर्वन्नासीत्।

एकदा धर्मशीलेन स्वगर्भागारस्थरक्षकं पृष्टम्, "भ्रातः! किन्नामास्ति तव?", "निर्भयोऽस्म्यहम्।" तेनोत्तरं दत्तम्। "तव कति पुत्रास्सन्ति?", "एकोऽपि नास्ति", रक्षकस्य स्वरे घोरनिराशा व्यापृताऽसीत्। "अहं तव हस्तरेखां दृष्ट्वा वदितुं शक्नोमि यत्तव संततिर्भविष्यति वा न।" धर्मशीलेन गभीरस्वरेण कथितमासीत्। "कृपया कथयन्तु।" आकाङ्क्षया उत्सुकताद्वारा तेन पृष्टम्। "किन्त्वन्धकारे ईदृशी तव हस्तरेखाः कथं द्रष्टुं शक्ष्यामि।" रक्षकोऽवदत्—"इयन्तु समस्यास्ति।" रक्षकस्य मुखे आशायाः दीप्तिः स्पष्टाऽसीत् परन्तु समस्यायाश्चिन्ताऽप्यासीत्। "एका युक्तिरस्ति। एकक्षणपर्यन्तं मां प्रकाशे नयतु, तत्रैव दृष्ट्वा सर्वं वदिष्यामि।"

रक्षकेण सर्वतो दृष्टमासीत्। कोऽपि नासीत्। शनैः शनैः तेन रक्षकेण गर्भागारस्य द्वारमुद्घाटितमासीत्। धर्मशीलश्च बहिरागच्छत्। प्रकाशे गत्वा तेन रक्षकेण स्वस्य दक्षिणहस्तः अग्रे कृतोऽसीत्। "भ्रातः! पुत्रप्राप्तेर्योगः अवश्यमेवास्ति परन्तु तस्मिन्नेका ग्रहबाधाऽस्ति। बाधायाः निवारणमप्यपरिहार्यमस्ति" धर्मशीलेन कुशलज्योतिषिणा समं तस्य हस्तरेखाः पश्यन्निदङ्कथितमासीत्। रक्षकोऽप्यतीव हर्षितोऽसीत्तेन च धर्मशीलस्य चरणौ गृहीत्वा कथितं यत्—"भवान्तु पण्डितोऽस्ति, कृपायाऽज्ञापयतु श्रीमन्! मया किङ्करणीयम्? भवत इदमुपकारं कदाप्यहं न विस्मरिष्यामि।"

धर्मशीलेनापि गभीररस्वरेण कथितं यत्—"तवग्रहबाधायाः शान्तये मया पूजानुष्ठानं कर्त्तव्यमस्ति आवश्यिकाः सामग्र्यः च त्वया परिग्रहणीयास्सन्ति।" "कास्काः सामग्र्यः सङ्ग्रहीतव्याः?" तेन मन्दस्वरेण



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पृष्टमासीत्। "एको महाघनः, केचन कीलकाः, एको लघुक्रकचः सीमन्तकं कानिचित् पुष्पाणि दीपप्रज्ज्वलनार्थञ्च सामग्र्य आनेतव्याः।" "महाघनः कीलकाः लघुक्रकचश्च! एते किमर्थम्?" धर्मशीलोऽवदत्— "दुष्टग्रहाणाम्मस्तेकषु।

महाघनेन कीलकानारोपयिष्यामि त्वाञ्च बन्धनकारीणां तेषाम्हस्तान् लघुक्रकचेन कर्तिष्यामि।" (तदा कस्यचिद् पदचापं श्रुत्वा धर्मशीलः तत्काले तस्मिन् क्षुद्रगर्भागारे यथावदगच्छत्। रक्षकोऽपि मूर्तिवत् स्वस्थानेऽतिष्ठत्। स हृदयेन प्रसन्नोऽऽसीत्। आगामीदिवसैव तेन रक्षकेण सर्वाण्यावश्यकद्रव्याण्यानीतान्यासन्।)

अर्द्धरात्रेर्समयोऽऽसीत्। व्याप्ताऽखीद् सर्वतो नीरवता। सर्वे रक्षकगणाः निद्रामग्ना आसन्। स रक्षकोऽपि प्रगाढ़निद्रायां घर्घरध्वनिः कुर्वन्नासीत्। स तु पुत्रप्राप्तेर्स्वप्ने निमग्नोऽऽसीत्। धर्मशीलोऽपि तस्य कर्मसाधनायां निरताऽऽसीत्। तेन निःशब्देन अतीवकुशलतया द्वारस्थाः कीलकाः महाघनेन निर्गताः आसन्। ततः तेन शनैः शनैः द्वारमुद्-घाटितमभवत्। अधुना धर्मशीलः कस्माच्चित् पिञ्जराद्मुक्तः सिंहोऽसीत् तस्य चलनञ्च कस्यचिद् मार्जरस्य सदृशमासीत्। तदानीम् तेन रक्षकेण स दृष्टो धर्मशीलेन च विद्युतगतिना तस्य खड्गः कृष्टोऽभवत् अन्ये च क्षणे शिरसि एकेन हस्तप्रहारेन स रक्षको लुप्तचैतन्यमानाभवत्। धर्मशीलः तं रक्षकम्मारयितुमपि समर्थोऽऽसीद् परन्तु स कृतज्ञोऽसीत्। सूर्योदयस्य पूर्वमेव स तत्रतः पर्याप्त दूरे गतोऽसीत्। इदानीं स शत्रुवशाद्मुक्तोऽसीत्।

महावीरो नाम्ना तस्येको मित्रमासीत्। स प्रच्छन्नरूपेण सदैव तस्य सहायक आसीत्। संयोगवशेन तयोः समागमोऽभवत्। ताभ्यां वीरपुरस्य दुर्गस्य विनिर्मुक्तीकरणस्यैका विशिष्टा योजना कृता।

धर्मशीलद्वारा एकस्य तपस्विनः वेशधारणङ्कृतमासीत्। दीर्घाः दीर्घाः जटाः रुद्राक्षमालाः कषायवस्त्राणि दक्षिणे हस्ते संदंशको वामे



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



च कमण्डलुरासीत्। सः प्रचण्डसेनस्य सैन्यशिविरस्य समीपस्थस्य एकस्य वटवृक्षस्याधोऽधिवसनम्प्रारभत। सैकः कुशलः गायकोऽसीत्। सर्वं दिनं मधुरस्वरे गायति स्म। कतिपयेषु दिवसेष्वेव तस्य गीतानां प्रशंसावचनानि प्रचण्डसेनापि श्रुतम्। सोऽपि तस्य गीतश्रवणायातीवोद्यतोऽभवत्।

धर्मशीलेन तस्यामन्त्रणं स्वीकृतमासीद् परन्तु तेनैको विलक्षणः समयः कृतः। समयोऽयमासीद्यद् गीतश्रावणाय स तस्य शतशिष्यैः सहागमिष्यति। प्रचण्डसेनेनायं समयः स्वीकृतोऽसीत्।

सांयकालीनवेलायां दुर्गस्यैकस्मिन् विशालकक्षे कार्यक्रमस्यायोजनस्य सर्वा व्यवस्था कृता। भव्यं वातावरणमासीत्। भित्तिषु सहस्राभिः दीपशिखाभिः अंतःपटलाद् प्रलम्बिताभिः काचदीपिकाभिः सर्वत्र भास्वरप्रकाशो व्यापृतोऽसीत्।

निश्चितसमये तपस्वीवेशधारी धर्मशीलः स्वशतशिष्यैः सह तत्र कक्षमध्ये स्वोच्चासने विराजमानाऽभवत्। तेषु पराक्रमी महावीरोऽप्यासीत्। सर्वे कषायवेशधारिणः आसन्। प्रचण्डसेनस्यादेशं गृहीत्वैव धर्मशीलस्य गायनमारब्धोऽभवत्। अचिरेण सर्वे तस्य मधुरगीतस्यालौकिकेन प्रभावेण कस्मिंश्चिदन्यजगति प्रविष्टा इवासन्। अर्द्धरात्रेर्समयोऽगतोऽसीत्। धर्मशीलेन कथितं यत्-श्रीमन्!

"अधुनाहं संगीतशास्त्रस्य तमद्भुतं दीपरागं श्रावयिष्यामि येन सर्वे शमितप्रकाशकाः पुनः प्रदीप्ता भविष्यन्ति। अत एव कृपया सर्वान् प्रकाशकान् उपकरणान् शमयन्तु।"

प्रचण्डसेनः पूर्णरूपेण मन्त्रमुग्धोऽभवत्। अतस्तेन तथैवादिष्टम्। सहसा सर्वतोऽन्धकारोऽभवत्। संगीतनादेन व्यामोहिता सैनिकाः रक्षकाश्च सर्वेऽर्द्धनिद्रायामासन्।

अकस्मादेको महानिनादोऽभवत्—"जयतु मातृभूमिः।" अनेन जयघोषेण सहाकस्माद् धर्मशीलस्य तपस्वीवेशधारिणः क्षुधाकुल-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सिंहैस्सदृशाः सैनिकाः प्रचण्डसेनस्य सेनास्वाक्रमन्। प्रचण्डसेनस्य भयाक्रान्ता सेना तेनाप्रत्याशिताक्रमणेन गोवृन्देन सदृशी भूत्वा इतस्ततः विकीर्णोऽभवत्।

प्रचण्डसेनस्य सेनाद्वारा उत्तम्भनायावसरो न प्राप्तोऽभवत्। युद्धातुरा सर्वे व्यपादिताः समर्पणशीलाश्च प्रश्रयप्राप्ताऽसन्। उषाकालाद्पूर्वमेव वीरपुरस्य दुर्गो धर्मशीलस्य अधिकारेऽभवत्। आगामिदिवसात् पुनः धर्मस्य राज्योऽभवत्।

(अस्याः कथायाः शिक्षेयमस्त्यदधर्मस्योपरि धर्मस्य विजयो शाश्वतो भवत्यैव। सदैवाशावादिता भवितव्या जीवने। दयाशीलता क्षमा च सर्वोच्चे शक्ती स्तः। स्वमातृभूम्यै स्वजीवनस्य त्यागः करणीयः।)

—५४२/३, अपर-आनन्दपर्वतः,

नव दिल्ली-११०००५

—::०::—



CC-0.Panini Kanya Maha Vidyalaya Collection.

